"एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्॥" (ब्रह्मबिन्दु० १२)
"नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः।
एकः स भिद्यते शक्त्या मायया न स्वभावतः॥"

इत्याद्याः श्रुति-स्मृतय आत्मैकत्वप्रतिपादिका नोपपद्यन्ते इति? तत्राह—

(आत्मैकत्वप्रतिपादकश्रुतिविरोधपरिहारः।—)

## नाद्वैतश्रुतिविरोधः, जातिपरत्वात्॥ १५४॥

आत्मैक्यश्रुतीनां विरोधस्तु नास्ति, तासां जातिपरत्वात्; जातिः सामान्यमेकरूपत्वं, तत्रैवाद्वैतश्रुतीनां तात्पर्य्यात्; न त्वखण्डत्वे, प्रयोजनाभावादित्यर्थः। जातिशब्दस्य चैकरूपताऽर्थकत्वमुत्तरसूत्राल्लभ्यते। यथाश्रुतजातिशब्दस्यादरे—"आत्मा इदमेक एवाग्र आसीत्" (ऐत० १।१) "सदेव सौम्येदमग्र आसीत्" (छान्दो० ६।२।१) "एकमेवाद्वितीयम्" (छान्दो० ६।२।१) इत्याद्यद्वैतश्रुत्युपपादकतयैव सूत्रं व्याख्येयं, जातिपरत्वात् विजातीयद्वैतनिषेधपरत्वादित्यर्थः।

तत्राद्यव्याख्यायामयं भावः,—आत्मैक्यश्रुति-स्मृतिष्वेकादिशब्दाश्चैकरूपतामात्रपराः, भेदादिशब्दाश्च वैधर्म्यलक्षणभेदपराः,

"एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु।
स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते॥"

इत्यादिवाक्येष्वेकरूपार्थत्वावश्यकत्वात; अन्यथा अवस्थात्रयेऽप्यात्मन एकतामात्रज्ञानेन स्थानत्रयव्यतीतशब्दोक्ताया अवस्थात्रयाभिमाननिवृत्तेरसम्भवात्, तथैकरूपताप्रतिपादनेनैव निखिलोपाधिविवेकेन सर्वात्मनां स्वरूपबोधनसम्भवाच्च। न ह्यन्यथा निर्धर्मकमात्मस्वरूपं विशिष्य ब्रह्मणाऽपि शब्देन साक्षात्प्रतिपादयितुं शक्यते, शब्दानां सामान्यमात्रगोचरत्वात्। आब्रह्मस्तम्बपर्य्यन्तेष्वात्मन एकरूपत्वे तु प्रतिपादिते तदुपपत्त्यर्थं शिष्यः स्वयमेव तावद्विवेचयति, यावन्निर्विशेषे शब्दगोचरे स्वरूपे पर्य्यवस्यतीति। ततश्च निःशेषाभिमाननिवृत्त्या कृतकृत्यो भवति। यदि पुनरद्वैतवाक्यान्यखण्डतामात्रपराणि स्युः, तर्हि तेभ्यो नाभिमान-

निवृत्तिः सम्भवति, आकाशे विविधशब्दवदखण्डेऽप्यात्मनि सुख-दुःख-तदभावादीनामवच्छेदकभेदैरुपपत्तेः। एकस्य वाक्यस्याखण्डत्वा-वैधर्म्योभयपरत्वे च वाक्यभेदः, अखण्डतापरकल्पनायां फलाभावश्च, अवैधर्म्यज्ञानादेव सर्वाभिमाननिवृत्तेः; अतोऽद्वैतवाक्यानि नाखण्डता-पराणि, न्यायानुग्रहेण बलवतीभिर्भेदग्राहकश्रुति-स्मृतिभिर्विरोधाच्च; किन्त्ववैधर्म्यलक्षणाभेदपराण्येव, साम्यबाधकश्रुति-स्मृतिभिरेकवाक्यत्वात्, "सामान्यात् तु" (३।२।३२) इति ब्रह्मसूत्राच्चेति। तत्र साम्ये श्रुतयः,—"यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति, एवं मुनेर्विजानत आत्मा भवति गौतम!" (कठ० ४।१५) "निरञ्जनः परमं साम्यमुपैति" (माण्डु० ३।१।३) इत्याद्याः। स्मृतयश्च—

> "ज्योतिरात्मनि नान्यत्र सर्वभूतेषु तत् समम्।
> स्वयं च शक्यते द्रष्टुं सुसमाहितचेतसा॥
> यावानात्मनि वेदात्मा तावानात्मा परात्मनि।
> य एवं सततं वेद सोऽमृतत्वाय कल्पते॥"

इत्याद्याः। उक्तश्रुतौ मोक्षदशायामपि भेदघटितसाम्यवचनात् स्वरूप-भेदोऽप्यात्मनामस्तीति सिद्धम्। अवधर्म्याभेदपरत्वं चास्मन्मते "विष्णुरहं" "शिवोऽहम्" इत्यादिवाक्यानां मन्तव्यम्। न तु "तत् त्वमसि" (छान्दो० ६।८।७) "अहं ब्रह्मास्मि" (बृह० उ० १।४।१०) इत्यादिवाक्यानामपि। तत्र साङ्ख्यमते प्रलयकालीनस्य पूर्णात्मन एव तदादिपदार्थतया "नित्यशुद्ध-मुक्तस्त्वमसि" इत्यादियथाश्रुतस्य तादृश-वाक्यार्थत्वात्। यदि तु सर्गाद्युत्पन्नपुरुषो नारायणाख्य एव तत्-पदार्थः, तदा "तत् त्वमसि" (छान्दो० ६।८।७) इत्यादिवाक्यानामप्यवैधर्म्यार्थ-कतैवास्तु। ननु प्रयोजनाभावान्न भेदपरत्वं श्रुतीनां सम्भवतीति चेत्? न, मोक्षोपपादनस्यैव प्रयोजनत्वात्, सृष्टि-संहारयोः प्रवाहरूपे-णानुच्छेदात् तस्यैक्ये मोक्षानुपपत्तेः। अथैवमात्मभेदस्य लोकसिद्धतया न तत्परत्वं श्रुतीनां घटते इति? नैवम्; लाघवतर्केणाकाशवदात्मन्येकत्व-स्यानुमानतः प्रसक्तस्य श्रुत्यादिभिर्निषेधात्, स्व-परचैतन्ययोर्भेदस्य चाप्रत्यक्षत्वात्, देहादिष्वेवानुभवात्। य "एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य

भयं भवति" इत्यादिभेदनिन्दा तु वैधर्म्यविभागान्यतरलक्षणभेदपरेति । नन्वेवं मुक्तानां प्रतिविम्बावच्छेदश्रुतीनां का गतिरिति चेत्? उच्यते, अनेकतेजोमयादित्यमण्डलवत् अनेकात्ममयमपि चिदादित्यमण्डल-मेकरसमविभक्तैकपिण्डीकृत्य तस्य किरणवत् स्वांशभूतबसङ्गपुरुष-नमङ्गोपाधिष्वङ्गाविभाग एव प्रतिविम्बादिदृष्टान्तैः प्रतिपाद्यते विभाग-लक्षणान्यत्वस्य वाचारम्भणमात्रत्वं बोधयितुं, न पुनरखण्डत्वं,

"वायुर्यथैको भुवनं प्रविष्टो" ( कठ० २।५।१० )

"रूपं रूपं प्रतिरूपो बभूव" ( कठ० ५।८।१० )

इत्यादिसांशदृष्टान्तश्रुतीनां न्यायानुग्रहेण बलवत्त्वादिति ।

यथा च स्मर्य्यते—

"यस्य सर्वात्मकत्वेऽपि खण्डयते नैकपिण्डता"

इति ब्रह्ममीमांसायां तु नित्याभिव्यक्ते परमेश्वरचैतन्येऽन्येषां लयरूपा-विभागेनाप्यद्वैतमुक्तम्, "अविभागो वचनात्" ( ४।२।१६ ) इति सूत्रेणेति । अधिकं तु ब्रह्ममीमांसाभाष्ये प्रोक्तमस्माभिरिति दिक् ।

सूत्रस्य द्वितीयव्याख्यायां त्वयं भावः,—प्रलयकाले पुरुषविजातीयं सर्वमेवासत्, अर्थक्रियाकारित्वाभावात् । पुरुषाणां कूटस्थत्वेनार्थक्रियैवा-प्रसिद्धेति; अतः सर्गकाले इव प्रलयेऽपि सत्त्वम्; अतस्तदात्मनां विजातीयद्वैतराहित्यम् । तथा सर्गकालेऽपि कूटस्थत्वरूपपारमार्थिक-सत्त्वनान्यत्वेनेति विजातीयद्वैतराहित्यात् सर्गकालीनाद्वैतश्रुतयोऽप्युप-पन्ना इति ॥ १५४ ॥

नन्वात्मन एकत्ववदेकरूपत्वमपि नानारूपताप्रत्यक्षेण विरुद्धं, तत् कथमुक्तं जातिपरत्वादिति? तत्राह—

( पुरुषस्य जातिपरत्वोक्तौ आपत्तिपरिहारः ।— )

## विदितबन्धकारणस्य दृष्ट्या अतद्रूपम् ॥ १५५ ॥

विदितं स्पष्टं बन्धकारणमविवेको यत्र तस्य दृष्ट्यैव पुरुषेष्वतद्रूपं रूपभेद इत्यर्थः; अतो भ्रान्तदृष्ट्या न रूपभेदसिद्धिरिति ॥ १५५ ॥

ननु तथाऽप्यनुपलम्भादेकरूपत्वाभावः सेत्स्यति? तत्राह—

( पुरुषस्य बहुरूपत्वखण्डनम् ।— )

**नान्धादृष्ट्या चक्षुष्मतामनुपलम्भः ॥ १५६ ॥**

अनुपलम्भ एवासिद्धः, अन्धैरदर्शनेऽपि ज्ञानिभिरेकरूपत्वस्य दर्शनात् इत्यर्थः ॥ १५६ ॥

अद्वैतश्रुत्यनुपपत्तिं समाधाय अखण्डाद्वैते बाधकान्तरमाह—

( अखण्डाद्वैतश्रुतौ बाधकान्तरप्रदर्शनम् ।— )

**वामदेवादिर्मुक्तः, नाद्वैतम् ॥ १५७ ॥**

वामदेवादिर्मुक्तोऽस्ति, तथाऽपीदानीं बन्धः स्वस्मिन्ननुभवसिद्धः ; अतो नाखण्डात्माऽद्वैतमित्यर्थः,

"स चापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्गमाप" इत्यादिवाक्यगतविरोधश्चेति शेषः। न चैवं बन्ध-मोक्षावुपाधेरेवेत्यवगन्तव्यं, श्रुति-स्मृतिसिद्धान्तविरोधात्। 'दुःखं मा भुञ्जीय' इति कामनादर्शनेन पुरुषमोक्षस्यैव मोक्षाख्यपरमपुरुषार्थत्वाच्च। उपाधेर्दुःखहानस्य च तादर्थ्येन परम्परयैव पुरुषार्थत्वात्, पुत्रादिवदिति। यदपि आधुनिकैर्मायावादिभिरुच्यते, अद्वैतश्रुतिविरोधात् बन्ध-मोक्ष-सृष्टि-संहारादिश्रुतयो बाध्यन्ते इति; तदप्यसत्, मोक्षाख्यफलस्यापि श्रवणकाले एवाभावनिश्चये श्रवणोत्तरं मननादिविधेरननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात्, प्रपञ्चान्तर्गतस्य वेदान्तस्याप्यद्वैतश्रुत्या बाधे वेदान्तावगतेऽप्यद्वैते पुनः संशयापत्तेश्च ; स्वाप्नवाक्यस्य जाग्रति बाधे तद्वाक्यार्थे पुनः संशयवत्। किञ्च, "मिथ्याबुद्धिर्नास्तिकता" इत्यनुशासनाद्धर्मादिषु स्वापवन्मिथ्यादृष्टयो बौद्धप्रभेदा एव सांवृत्तिकशब्देन प्रपञ्चस्याविद्यकतायाश्च तैरभ्युपगमादिति दिक् ॥ १५७ ॥

ननु वामदेवादेरपि परममोक्षो न जात इत्यभ्युपेयम् ? तत्राह—

( अनादिकालात् परममोक्षाभावोक्तिः ।— )

**अनादावद्य यावदभावात्,भविष्यदप्येवम् ॥१५८॥**

अनादौ कालेऽद्य यावच्चेन्मोक्षो न जातः कस्यापि, तर्हि

भविष्यत्कालोऽप्येवं मोक्षशून्य एव स्यात्, सम्यक्साधनानुष्ठानस्याविशेषादित्यर्थः ॥ १५८ ॥

तत्र प्रयोगमाह—

( परममोक्षस्य अभावविषये प्रयोगप्रदर्शनम् —)

## इदानीमिव सर्वत्र नात्यन्तोच्छेदः ॥ १५९ ॥

सर्वत्र काले बन्धस्यात्यन्तोच्छेदः कस्यापि पुंसो नास्ति, वर्त्तमानकालवदित्यनुमानं सम्भवेदित्यर्थः ॥ १५९ ॥

पुरुषाणां यदेकरूपत्वमेकत्वप्रतिपादकश्रुत्यर्थोऽवधारितं, तत् किं मोक्षकाले ? किं सर्वदैव ? इत्याकाङ्क्षायामाह—

( पुरुषस्य सदैवैकरूपत्वप्रतिपादनम् ।— )

## व्यावृत्तोभयरूपः ॥ १६० ॥

स च पुरुषो व्यावृत्तोभयरूपः, व्यावृत्तो निवृत्तो रूपभेदो यस्मात् तथेत्यर्थः, श्रुति-स्मृति-न्यायेभ्यः सदैकरूपतासिद्धेरिति शेषः । तदुक्तं—

"बहुरूप इवाभाति मायया बहुरूपया ।
रममाणो गुणेष्वस्या ममाहमिति बध्यते ॥" इति ।

"जगदाख्यमहास्वप्ने स्वप्नात् स्वप्नान्तरं व्रजत् ।
रूपं त्यजति को शान्तं ब्रह्म शान्तत्वबृंहितम् ॥"

इति च ॥ १६० ॥

ननु साक्षित्वस्यानित्यत्वात् पुरुषाणां कथं सदैकरूपत्वम् ? तत्राह—

( पुरुषस्य साक्षित्वेऽपि सदैवैकरूपत्वप्रतिपादने युक्तिः ।— )

## साक्षात् सम्बन्धात् साक्षित्वम् ॥ १६१ ॥

पुरुषस्य यत् साक्षित्वमुक्तं, तत् साक्षात् सम्बन्धमात्रात्, न तु परिणामत इत्यर्थः । साक्षात्सम्बन्धेन बुद्धिमात्रसाक्षिताऽवगम्यते, "साक्षाद्द्रष्टरि संज्ञायाम्" (५।२।९१ पा०) इति साक्षिशब्दव्युत्पादनात् । साक्षाद्द्रष्टृत्वं चाव्यवधानेन द्रष्टृत्वम् । पुरुषे च साक्षात्सम्बन्धः स्वबुद्धिवृत्तेरेव भवति ; अतो बुद्धेरेव साक्षी पुरुषः, अन्येषां तु द्रष्टृमात्रमिति शास्त्रीयो विभागः । ज्ञाननियामकश्चार्थाकारतास्थानीयः प्रतिविम्बरूप

एव सम्बन्धः, न तु संयोगमात्रम्, अतिप्रसङ्गादित्यस्कृदावेदितम् । विज्ञानादेः सर्वसाक्षित्वं त्विन्द्रियादिव्यवधानाभावमात्रेण गौणम् ; "अक्षसम्बन्धात् साक्षित्वम्" इति पाठे त्वक्षमत्र बुद्धिः, करणत्व-सामान्यात् ; तस्या यथोक्तात् प्रतिबिम्बरूपात् सम्बन्धादित्यर्थः । १६१ ॥

उभयरूपत्वाभावसिद्ध्यर्थं पुरुषस्यापरौ विशेषावाह सूत्राभ्याम्—

( पुरुषस्य नित्यमुक्तत्वोक्तिः ।— )

## नित्यमुक्तत्वम् ॥ १६२ ॥

सदैव पुरुषस्य दुःखाख्यबन्धशून्यत्वं, दुःखादेर्बुद्धिपरिणामत्वा-दित्यर्थः, पुरुषार्थस्तु दुःखभोगनिवृत्तिः प्रतिबिम्बरूपदुःखनिवृत्तिरेवेत्युक्त-मेव ॥ १६२ ॥

( पुरुषस्य अकर्तृत्वोक्तिः ।— )

## औदासीन्यं चेति ॥ १६३ ॥

औदासीन्यमकर्तृत्वं, तेन चान्येऽपि निष्कामत्वादय उपलक्षणीयाः "कामः, सङ्कल्पः, विचिकित्सा, श्रद्धा, अश्रद्धा, धृतिः, अधृतिः, धीः, ह्रीः, भीरित्येतत् सर्वं मन एव" ( बृह० उ० १।५।३ ) इति श्रुतेः । इति-शब्दः पुरुषधर्मप्रतिपादनसमाप्तौ ॥ १६३ ॥

नन्वेवं प्रकृति-पुरुषयोरन्योऽन्यं वैधर्म्येण विवेके सिद्धे पुरुषस्य कर्तृत्वं बुद्धेरपि च ज्ञातृत्वं श्रुति-स्मृत्योरुच्यमानं कथमुपपद्येयाताम् ? तत्राह—

( श्रुति-स्मृत्युक्तपुरुषकर्तृत्वे स्वमतप्रदर्शनम् ।— )

## उपरागात् कर्तृत्वं, चित्सान्निध्याच्चित्-सान्निध्यात् ॥ १६४ ॥

अत्र यथायोग्यमन्वयः ; पुरुषस्य यत् कर्तृत्वं तद्बुद्ध्युपरागात् ; बुद्धेश्च या चित्ता सा पुरुषसान्निध्यात् ; एतदुभयं न वास्तवमित्यर्थः ; यथा अग्न्यायसोः परस्परं संयोगविशेषात् परस्परधर्मव्यवहार औपाधिकः, यथा वा जल-सूर्ययोः संयोगात् परस्परधर्मारोपः, तथैव बुद्धि-पुरुषयोरिति भावः । एतच्च कारिकयाऽप्युक्तम्—

"तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।
गुणकर्तृत्वे च तथा कर्त्तेव भवत्युदासीनः ॥"

इति । विविक्तात्विध्यादिति द्विःपाठोऽध्यायसमाप्तिसूचनार्थः ॥ १६४ ॥

हेय-हानं तयोर्हेतू इति व्यूहा यथाक्रमम् ।
चत्वारः शास्त्रमुख्यार्था अध्यायेऽस्मिन् प्रपञ्चिताः ॥
सङ्क्षिप्तसाङ्ख्यसूत्राणामर्थस्यात्र प्रपञ्चनात् ।
शास्त्रं योगवदेवेदं साङ्ख्यप्रवचनाभिधम् ॥

इति विज्ञानाचार्य्यनिर्मिते कापिलसाङ्ख्यप्रवचनस्य
भाष्ये विषयाध्यायः प्रथमः ॥ १ ॥

---

# द्वितीयोऽध्यायः ।

शास्त्रस्य विषयो निरूपितः । साम्प्रतं पुरुषस्यापरिणामित्वोपपादनाय प्रकृतितः सृष्टिप्रक्रियामतिविस्तरेण द्वितीयाध्याये वक्ष्यति ; तत्रैव प्रधानकार्य्याणां स्वरूपं विस्तरतो वक्तव्यं, तेभ्योऽपि पुरुषस्यातिस्फुट-विवेकाय ; अत एव—

"विकारं प्रकृतिं चैव पुरुषं च सनातनम् ।
यो यथावद्विजानाति स वितृष्णो विमुच्यते ॥"

इति मोक्षधर्मादिषु त्रयाणामेव ज्ञेयत्ववचनम् । तत्रादावचेतनायाः प्रकृतेर्निष्प्रयोजनसृष्टृत्वे मुक्तस्यापि बन्धप्रसङ्ग इत्याशयेन जगत्सर्जने प्रयोजनमाह—

( प्रधानस्य जगत्स्रष्टृत्वे हेतुप्रदर्शनम् ।— )

**विमुक्तमोक्षार्थं स्वार्थं वा प्रधानस्य ॥ १ ॥**

कर्तृत्वमिति पूर्वाध्यायशेषसूत्रादनुषज्यते । स्वभावतो दुःखबन्धात् विमुक्तस्य पुरुषस्य प्रतिबिम्बरूपदुःखमोक्षार्थं प्रतिबिम्बसम्बन्धेन दुःखमोक्षार्थं

वा प्रधानस्य जगत्कर्तृत्वम् । अथवा स्वार्थं स्वस्य पारमार्थिक-दुःखनोक्षार्थमित्यर्थः । यद्यपि मोक्षवद्भोगोऽपि सृष्टेः प्रयोजनं, तथाऽपि मुख्यत्वान्मोक्ष एवोक्तः ॥ १ ॥

ननु मोक्षाय चेत् सृष्टिः, तर्हि सकृत् सृष्ट्यैव मोक्षसम्भवे पुनः पुनः सृष्टिर्न स्यादिति ? तत्राह—

( विरक्तस्य मोक्षलाभोक्तिः ।— )

## विरक्तस्य तत्सिद्धेः ॥ २ ॥

नैकदा सृष्टेर्मोक्षः, किन्तु बहुशो जन्म-मरण-व्याध्यादिविविधदुःखेन भृशं तप्तस्य ; ततश्च प्रकृति-पुरुषयोर्विवेकख्यात्योत्पन्नपरवैराग्यस्यैव मोक्षोत्पत्तिसिद्धेरित्यर्थः ॥ २ ॥

सकृत् सृष्ट्या वैराग्यासिद्धौ हेतुमाह—

( सहसा वैराग्यानुत्पत्तौ हेतुप्रदर्शनम् ।— )

## न श्रवणमात्रात् तत्सिद्धिः, अनादिवासनाया बलवत्त्वात् ॥ ३ ॥

श्रवणमपि बहुजन्मकृतपुण्येन भवति । तत्रापि श्रवणमात्रान्न वैराग्य-सिद्धिः, किन्तु साक्षात्कारात् । साक्षात्कारश्च झटिति न भवति, अनादि-मिथ्यावासनाया बलवत्त्वात्, किन्तु योगनिष्ठया । योगे च प्रतिबन्ध-बाहुल्यमित्यतो बहुजन्मभिरेव वैराग्यं मोक्षश्च कदाचित् कस्यचिदेव सिध्यतीत्यर्थः ॥ ३ ॥

सृष्टिप्रवाहे हेत्वन्तरमाह—

( सृष्टिप्रवाहे हेतुप्रदर्शनम् ।— )

## बहुभृत्यवद्वा प्रत्येकम् ॥ ४ ॥

यथा गृहस्थानां प्रत्येकं बहवो भर्त्तव्या भवन्ति स्त्रीपुत्रादिभेदेन, एवं सत्त्वादिगुणानामपि प्रत्येकमसङ्ख्यपुरुषा विमोचनीया भवन्ति ; अतः कियत्पुरुषमोक्षेऽपि पुरुषान्तरमोचनार्थं सृष्टिप्रवाहो घटते, पुरुषाणामानन्त्यादित्यर्थः । तथा च योगसूत्रं—"कृतार्थं प्रति नष्ट-मप्यनष्टं, तदन्यसाधारणत्वात्" ( साध० पा० २२ ) इति ॥ ४ ॥

ननु प्रकृतेरेव स्रष्टृत्वं कथमुच्यते, "एतस्मादात्मन आकाशः सम्भूतः" ( तैत्तिरी २।१।१ ) इति श्रुत्या पुरुषस्यापि स्रष्टृत्वसिद्धेरिति ? तत्राह—

( पुरुषे स्रष्टृत्वाध्यासोक्तिः ।— )

## प्रकृतिवास्तवे च पुरुषस्याध्याससिद्धिः ॥ ५ ॥

प्रकृतौ स्रष्टृत्वस्य वस्तुत्वे च सिद्धे पुरुषस्य स्रष्टृत्वाध्यास एव श्रुतिषु सिध्यति, उपासनायामेव श्रुतेस्तात्पर्य्यात्, "अजामेकाम्" ( श्वेताश्व० ४।५ ) इत्यादिश्रुत्यन्तरेण प्रकृतेः स्रष्टृत्वसिद्धेः, पुंसां कूटस्थचिन्मात्रताबोधक-श्रुत्यन्तरविरोधाच्चेत्यर्थः । अयं चाध्यास उपचाररूपो लोके सिद्ध एवास्ति ; यथा स्वशक्तिषु योधेषु वर्त्तमानौ जय-पराजयौ राजन्युपचर्य्येते, तथा स्वशक्तौ प्रकृतौ वर्त्तमानं स्रष्टृत्वादिकं शक्तिमत्सु पुरुषेषूपचर्य्येते, शक्ति-शक्तिमदभेदात् । तदुक्तं कौर्मे—

"शक्ति-शक्तिमतोर्भेदं पश्यन्ति परमार्थतः ।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः ॥"

इति । भेदमन्योऽन्याभावभेदं चाविभागरूपं प्रकृत्यादितत्त्वोपासकाः पश्यन्तीत्यर्थः । तयोश्चोदाहरणम्—"अथात आदेशो नेति नेति" ( बृह० उ० २।३।६ ) इत्यादिश्रुतिः, "आत्मैवेदं सर्वम्" ( छान्दोग्य० ७.२५।२ ) इत्यादिश्रुतिश्चेति भावः ॥ ५ ॥

नन्वेवं प्रकृतावपि स्रष्टृत्वं वास्तवमिति कुतोऽवधृतं, सृष्टेः स्वप्नादि-तुल्यताया अपि श्रवणादिति ? तत्राह—

( प्रकृतेरेव स्रष्टृत्वोक्तिः ।— )

## कार्य्यतस्तत्सिद्धेः ॥ ६ ॥

कार्य्याणामर्थक्रियाकारितया वास्तवत्वेन कार्य्यत एव धर्मिग्राहक-प्रमाणेन प्रकृतेर्वास्तवस्रष्टृत्वसिद्धेरित्यर्थः । स्वप्नादितुल्यताश्रुतयस्त्वनित्यता-रूपासत्त्वांशमात्रे पुरुषाध्यस्तत्वांशे वा बोध्याः, अन्यथा सृष्टिप्रतिपादक-श्रुतिविरोधात्, स्वप्नपदार्थानामपि मनःपरिणामत्वेनात्यन्तासत्ताविरहा-च्चेति ॥ ६ ॥

ननु प्रकृतेः स्वार्थत्वपक्षे मुक्तपुरुषं प्रत्यपि सा प्रवर्त्तेत ? तत्राह—

( मुक्तपुरुषं प्रति प्रकृतेरप्रवृत्तौ युक्तिप्रदर्शनम् ।— )

## चेतनोद्देशान्नियमः, कण्टकमोक्षवत् ॥ ७ ॥

चिती संज्ञाने इति व्युत्पत्त्या चेतनोऽत्राभिज्ञः । यथैकमेव कण्टकं यश्चेतनोऽभिज्ञस्तस्मादेव मुच्यते, तं प्रत्येव दुःखात्मकं न भवति, अन्यान् प्रति तु भवत्येव ; तथा प्रकृतिरपि चेतनादभिज्ञात् कृतार्थादेव मुच्यते, तं प्रत्येव दुःखात्मिका न भवति, अन्याननभिज्ञान् प्रति तु दुःखात्मिका भवत्येवेति नियमो व्यवस्थेत्यर्थः । एतेन स्वभावतो बद्धाया अपि प्रकृतेः स्वमोक्षो घटते इत्यतो न मुक्तपुरुषं प्रति प्रवर्त्तते ॥ ७ ॥

ननु पुरुषे स्रष्टृत्वमध्यस्तमात्रमिति यदुक्तं, तन्न युक्तं, प्रकृतिसंयोगेन पुरुषस्यापि महदादिपरिणामौचित्यात् ; दृष्टो हि पृथिव्यादियोगेन काष्ठादेः पृथिव्यादिसदृशः परिणाम इति ? तत्राह—

( पुरुषे स्रष्टृत्वाध्यासोक्तिसमर्थनाय युक्तिः ।— )

## अन्ययोगेऽपि तत्सिद्धिर्नाञ्जस्येन, अयोदाहवत् ॥ ८ ॥

प्रकृतियोगेऽपि पुरुषस्य न स्रष्टृत्वसिद्धिराञ्जस्येन साक्षात् । तत्र दृष्टान्तः अयोदाहवत्, यथा अयसो न दग्धृत्वं साक्षादस्ति, किन्तु स्वसंयुक्ताग्निद्वारकमध्यस्तमेवेत्यर्थः । उक्तदृष्टान्ते तूभयोः परिणामः प्रत्यक्षसिद्धत्वादिष्यते, सन्दिग्धस्थले त्वेकस्यैव परिणामेनोपपत्तावुभयोः परिणामकल्पने गौरवम् ; अन्यथा जपासंयोगात् स्फटिकस्य रागपरिणामापत्तेरिति ॥ ८ ॥

सृष्टेः फलं मोक्ष इति प्रागुक्तम्, इदानीं सृष्टेर्मुख्यं निमित्तकारणमाह—

( सृष्टेर्निमित्तकारणनिर्देशः ।— )

## राग-विरागयोर्योगः सृष्टिः ॥ ९ ॥

रागे सृष्टिः, वैराग्ये च योगः स्वरूपेऽवस्थानं, मुक्तिरिति यावत्, अथवा चित्तवृत्तिनिरोध इत्यर्थः । तथा चान्वयव्यतिरेकाभ्यां रागः सृष्टिकारणमित्याशयः । तथा च, श्रुतिरपि ब्रह्मादिरूपां विविधकर्मगतिमुक्त्वा आह—"इति तु कामयमानः, योऽकामः, न तस्य प्राणा

उत्क्रामन्ति" (बृह० उ० ४।४।६) इति। रागवैराग्ये अपि प्रकृतिधर्मावेव। ९।

इतः परं सृष्टिप्रक्रियां वक्तुमारभते—

(सृष्टिक्रमवर्णनारम्भः।—)

## महदादिक्रमेण पञ्चभूतानाम् ॥ १० ॥

सृष्टिरिति पूर्वसूत्रादनुवर्त्तते। यद्यपि "एतस्मादात्मन आकाशः सम्भूत" (तैत्तिरी० २।१।१) इत्यादिश्रुतावादावेव पञ्चभूतानां सृष्टिः श्रूयते, तथाऽपि महदादिक्रमेणैव पञ्चभूतानां सृष्टिरिष्टेत्यर्थः। तेज-आदिसृष्टिश्रुतौ गगनवायुसृष्टेरपूरणवदुक्तश्रुतावप्यादौ महदादिसृष्टिः पूरणीयेति भावः। अत्र च प्रमाणं, घटसृष्टिवदन्तःकरणातिरिक्ताखिल-सृष्टेरन्तःकरणवृत्तिपूर्वकत्वानुमानम्। किञ्च—

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।

खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी॥" (मुण्ड० २।१।३)

इति श्रुत्यन्तरस्थपाठक्रमानुरोधेन, "स प्राणमसृजत् प्राणाच्छ्रद्धां खं वायुम्" (प्रश्न० ६।४) इत्यादिश्रुत्यन्तरेण च पञ्चभूतसृष्टेः प्राङ्महदादि-सृष्टिरवधार्य्यते इति। प्राणश्चान्तःकरणस्य वृत्तिभेद इति वक्ष्यति; अतोऽस्यां श्रुतौ प्राण एव महत्तत्त्वमिति। तथा वेदान्तसूत्रमपि महदादिक्रमेणैव सृष्टिं वक्ति, "अन्तरा विज्ञान-मनसी क्रमेण तल्लिङ्गात्" (२।३।१५) इति। महदाकाशयोर्मध्ये बुद्धि-मनसी उत्पाद्ये इति क्रमेणेत्यर्थः, मनसि चाहङ्कारस्य प्रवेश इति॥ १०॥

प्रकृतेरेव स्रष्टृत्वं स्वमोचार्थं, तस्या नित्यत्वात्। महदादीनां तु स्वस्वविकारस्रष्टृत्वं न स्वमोचार्थम्, अनित्यत्वादिति विशेषमाह—

(महदादीनां पुरुषमोचार्थं स्रष्टृत्वोक्तिः।—)

## आत्मार्थत्वात् सृष्टेः, नैषामात्मार्थ आरम्भः ॥११॥

एषां महदादीनां स्रष्टृत्वस्यात्मार्थत्वात् पुरुषमोचार्थत्वान्न स्वार्थं आरम्भः स्रष्टृत्वं, विनाशित्वेन मोचायोगादित्यर्थः। परमोचार्थकत्वे

चावश्यके पुरुषमोक्षार्थकत्वमेव युक्तं, न प्रकृतिमोक्षार्थकत्वं, तस्याः पुरुषगुणत्वादिति ॥ ११ ॥

खण्डदिक्कालयोः सृष्टिमाह—

( दिक्कालयोः सृष्टिवर्णनम् ।— )

## दिक्कालावाकाशादिभ्यः ॥ १२ ॥

नित्यौ यौ दिक्कालौ तावाकाशप्रकृतिभूतौ प्रकृतेर्गुणविशेषावेव ; अतो दिक्कालयोर्विभुत्वोपपत्तिः । "आकाशवत् सर्वगतश्च नित्यः" ( गरुड़पु० का० ३।३ ) इत्यादिश्रुत्युक्तं विभुत्वं चाकाशस्योपपन्नम् । यौ तु खण्डदिक्कालौ, तौ तु तत्तदुपाधिसंयोगादाकाशादुत्पद्येते इत्यर्थः, आदिशब्देनोपाधिग्रहणादिति । यद्यपि तत्तदुपाधिविशिष्टाकाशमेव खण्डदिक्कालौ, तथाऽपि विशिष्टस्यातिरिक्तताऽभ्युपगमवादेन वैशेषिकनये श्रोत्रस्य कार्य्यतावत् तत्कार्य्यत्वमत्रोक्तम् ॥ १२ ॥

इदानीं महदादिक्रमेणोत्पन्नान् स्वरूपतो धर्मतश्च क्रमेण दर्शयति—

( महत्तत्त्वस्य स्वरूपवर्णनम् ।— )

## अध्यवसायो बुद्धिः ॥ १३ ॥

महत्तत्त्वस्य पर्य्यायो बुद्धिरिति । अध्यवसायश्च निश्चयाख्यः, तस्याऽसाधारणी वृत्तिरित्यर्थः । अभेदनिर्देशस्तु धर्म-धर्म्यभेदात् । अस्याश्च बुद्धेर्महत्त्वं स्वेतरसकलकार्य्यव्यापकत्वान्महैश्वर्य्याच्च मन्तव्यम् ।

"सविकारात् प्रधानात तु महत्तत्त्वमजायत ।
महानिति यतः ख्यातिर्लोकानां जायते सदा ॥"

इति स्मृतेः । "अस्य महतो भूतस्य निःश्वसितमेतत् यत् ऋग्वेदः" ( वृह० उ० २।४।१० ) इत्यादि श्रुति-स्मृतिषु च हिरण्यगर्भे चेतनेऽपि महानिति शब्दो बुद्ध्यभिमानित्वेनैव । यथा पृथिव्यभिमानिचेतने पृथिवीशब्दः, तद्वत् । एवमेव रुद्रादिष्वहङ्कारादिशब्दोऽपि बोध्यः । प्रकृत्यभिमानिदेवतामारभ्य सर्वेषामेव भूताभिमानिपर्य्यन्तानां स्वस्वबुद्धिरूपाश्च प्रतिनियतोपाधयो महत्तत्त्वस्यैवांशा इति ॥ १३ ॥

महत्तत्त्वस्यापरानपि धर्मानाह—

( महत्तत्त्वस्य कार्य्यवर्णनम् ।— )

## तत्कार्य्यं धर्मादि ॥ १४ ॥

धर्म-ज्ञान वैराग्यैश्वर्य्याण्यपि बुद्धग्रुपादानकानि, नाहङ्कारादुपादानकानि, बुद्धेरेव निरतिशयसत्त्वकार्य्यत्वादित्यर्थः ॥ १४ ॥

नन्वेवं कथं नर-पश्वादिगतानां बुद्ध्यंशानामधर्मप्राबल्यमुपपद्यताम् ? तत्राह—

( महत्तत्त्वस्य कार्य्यान्तरवर्णनम् ।— )

## महदुपरागाद्विपरीतम् ॥ १५ ॥

तदेव महन्महत्तत्त्वं रजस्तमोभ्यामुपरागात् विपरीतं क्षुद्रधर्माज्ञानावैराग्यानैश्वर्य्यधर्मकमपि भवतीत्यर्थः । एतेन सर्वे एव पुरुषा ईश्वरा इति श्रुति-स्मृतिप्रवादोऽप्युपपादितः, सर्वोपाधीनां स्वाभाविकैश्वर्य्यस्य रजस्तमोभ्यामिवावरणादिति । नन्वेवं धर्माद्यवस्थानार्थं बुद्धेरपि नित्यत्वात् कथं कार्य्यतेति चेत् ? न, प्रकृत्यंशरूपे वीजावस्थमहत्तत्त्वे सत्त्वविशिष्टे कर्मवासनादीनामवस्थानात् तस्यैव ज्ञानकारणावस्थायामङ्कुरवदुपपत्त्यङ्गीकारात् । तथा चाकाशवदेव नित्यानित्योभयरूपा बुद्धिः, यथाकारणं स्वाकारः, प्रकृतिप्रभावादिति ॥ १५ ॥

महत्तत्त्वं लक्षयित्वा तत्कार्य्यमहङ्कारं लक्षयति—

( अहङ्कारस्य स्वरूपवर्णनम् ।— )

## अभिमानोऽहङ्कारः ॥ १६ ॥

अहं करोतीत्यहङ्कारः कुम्भकारवत् ; अन्तःकरणद्रव्यम् । स च धर्म-धर्म्यभेदादभिमान इत्युक्तः, असाधारणवृत्तितासूचनाय । बुद्ध्या निश्चित एवार्थेऽहङ्कार ममकारौ जायेते ; अतो वृत्त्योः कार्य्य-कारणभावानुसारेण वृत्तिमतोरपि कार्य्य-कारणभाव उन्नीयते इति प्रागेवोक्तम् ; अन्तःकरणमेकमेव वीजाङ्कुर-महावृक्षादिवदवस्थात्रयमात्रभेदात् कार्य्य-कारणभावमापद्यते इति च प्रागेवोक्तम् ; अत एव वायु-मात्स्ययोः,—

"मनो महान् मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः"

इति मनोबुद्ध्योरेकपर्य्यायत्वमुक्तमिति ॥ १६ ॥

क्रमागतमहङ्कारस्य कार्य्यमाह—

( अहङ्कारस्य कार्य्यवर्णनम् ।— )

**एकादश-पञ्चतन्मात्रं यत्कार्य्यम् ॥ १७ ॥**

एकादशेन्द्रियाणि शब्दादिपञ्चतन्मात्रं चाहङ्कारस्य कार्य्यमित्यर्थः। मया अनेनेन्द्रियेणेदं रूपादिकं भोक्तव्यम्, इदमेव सुखसाधनमित्याद्यभिमानादेवादिसर्गेष्विन्द्रिय-तद्विषयोत्पत्त्या अहङ्कार इन्द्रियादिहेतुः, लोके भोगाभिमानिनैव रागद्वारा भोगोपकरणकरणादर्शनात्, "रूपरागादभूच्चक्षुः" इत्यादिना मोक्षधर्मे हिरण्यगर्भस्य रागादेव समष्टिचक्षुराद्युत्पत्तिस्मरणाच्चेति भावः; अतश्च भूतेन्द्रिययोर्मध्ये रागधर्मक मन एवादावहङ्कारादुत्पद्यते इति विशेषः, तन्मात्रादीनां रागकार्य्यत्वादिति ॥ १७ ॥

तत्रापि विशेषमाह—

( सात्त्विकाहङ्कारस्य कार्य्यवर्णनम् ।— )

**सात्त्विकमेकादशकं प्रवर्त्तते वैकृतादहङ्कारात् ॥ १८ ॥**

एकादशानां पूरणमेकादशकं मनः षोड़शात्मगणमध्ये सात्त्विकम्, अतस्तत् वैकृतात् सात्त्विकाहङ्काराज्जायते इत्यर्थः। अतश्च राजसाहङ्कारात् दशेन्द्रियाणि, तामसाहङ्काराच्च तन्मात्राणीत्यधिगन्तव्यं—

"वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधा।
अहं-तत्त्वाद्विकुर्वाणान्मनो वैकारिकादभूत् ॥
वैकारिकाश्च ये देवा अर्थाभिव्यञ्जनं यतः।
तैजसादिन्द्रियाण्येव ज्ञान-कर्ममयानि च ॥
तामसो भूतसूक्ष्मादिर्यतः खं लिङ्गमात्मनः ॥"

इत्यादिस्मृतिभ्य एव निर्णयात्; अत एव पुराणाद्यनुसारेण कारिकायामप्येतदुक्तं—

"सात्त्विक एकादशकः प्रवर्त्तते वैकृतादहङ्कारात्।
भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥"

इति। तैजसो राजसः। उभयं ज्ञान-कर्मेन्द्रिये। ननु "देवतालय-

श्रुति." (२।२१) इत्यागामिसूत्रे करणाना देवान् वक्ष्यति; तत् कथं कारिकयाऽपि देवाना सात्त्विकाहङ्कारकार्य्यत्व नोक्तमिति? उच्यते— समष्टिचक्षुरादिशरीरिण सूर्य्यादिचेतना एव चक्षुरादिदेवता श्रूयन्ते; अतश्च व्यष्टिकरणाना समष्टिकरणानि देवतत्येव पर्य्यवस्यति। तथा च, व्यष्टि-समष्ट्योरेकताऽऽश्रयेणात्र शास्त्रे देवा करणेभ्यो न पृथङ्निर्दिश्यन्ते; अत समष्टीन्द्रियाणि मनोऽपेक्षया अल्पसत्त्वत्वेन राजसाहङ्कारकार्य्यत्वेनैव निर्दिष्टानि। स्मृतिषु च व्यष्टीन्द्रियापेक्षया अधिकसत्त्वत्वेन सात्त्विकाहङ्कारकार्य्यतयोक्तानीत्यविरोध इत्यवगन्तव्यम्; तदेवमहङ्कारस्य त्रैविध्यात् महतोऽपि तत्कारणस्य त्रैविध्य मन्तव्य—

"सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्"

इति स्मरणात्। त्रैविध्य चानयोर्व्यक्तिभेदादशभेदादित्यन्यदेतत्॥ १८॥

एकादशेन्द्रियाणि दर्शयति—

(एकादशेन्द्रियाणि।—)

## कर्मेन्द्रिय-बुद्धीन्द्रियैरान्तरमेकादशकम्॥ १९॥

कर्मेन्द्रियाणि वाक् पाणि-पाद-पायूपस्थानि पञ्च, ज्ञानेन्द्रियाणि च चक्षु-श्रोत्र-त्वग्रसना-घ्राणाख्यानि पञ्च; एतैर्दशभि सहान्तर मन एकादशकमेकादशेन्द्रियमित्यर्थ। इन्द्रस्य सङ्घातेश्वरस्य करणमिन्द्रियम्; तथा च, अहङ्कारकार्य्यत्वे सति करणत्वमिन्द्रियत्वमिति॥ १९॥

इन्द्रियाणा भौतिकत्वमत निराकरोति—

(इन्द्रियाणा भौतिकत्वमतनिरसनम्।—)

## आहङ्कारिकत्वश्रुतेर्न भौतिकानि॥ २०॥

इन्द्रियाणीति शेष। आहङ्कारिकत्वे च प्रमाणभूता श्रुति काल-लुप्ताऽप्याचार्य्यवाक्यात् मन्वाद्यखिलस्मृतिभ्यश्चानुमीयते। प्रत्यक्षा श्रुति "अह बहु स्याम्" (छान्दो० ६।२।३) इत्यादि। ननु "अन्नमय हि सौम्य! मन" (छान्दो० ६।५।४) इत्यादिर्भौतिकत्वेऽपि श्रुति-रस्तीति चेत्? न; प्रकाशकत्वसाम्येनान्त करणोपादानत्वस्यैवोचिततया आहङ्कारिकत्वश्रुतेरेव मुख्यत्वात्; भूतानामपि हिरण्यगर्भसङ्कल्पजन्यतया

अन्नस्य मनोजनकत्वाच्च । व्यष्टिमन-आदीनां भूतसंसृष्टतयैव निष्कृतां भूतेभ्योऽभिव्यक्तिमालेख्य तु भौतिकश्रुतिर्गौणीति ॥ २० ॥

ननु तथाऽप्याहङ्कारिकत्वनिर्णयो न घटते, "अस्य पुरुषस्याग्निं वागप्येति, वातं प्राणः, चक्षुरादित्यम्" ( बृह० उ० ३।२।१३ ) इत्यादि-श्रुतौ देवतास्विन्द्रियाणां लयकथनेन दैवतोपादानकत्वस्याप्यवगमात् कारणे एव हि कार्य्यस्य लयः ? इत्याशङ्कयाह—

( देवतालयश्रुतेः तात्पर्य्यवर्णनम् ।— )

## देवतालयश्रुतिर्नारम्भकस्य ॥ २१ ॥

देवतासु या लयश्रुतिः सा नारम्भकस्य, नारम्भकविषयिणीत्यर्थः, अनारम्भकेऽपि भूतले जलबिन्दोर्लयदर्शनात्, अनारम्भकेष्वपि भूतेषु आत्मनो लयश्रवणाच्च, "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति" ( बृह० उ० २।४।१२ ) इत्यादि श्रुताविति भावः ॥ २१ ॥

इन्द्रियान्तर्गतं मनो नित्यमिति केचित्, तत् परिहरति—

( मनसो नित्यत्वखण्डनम् ।— )

## तदुत्पत्तिश्रुतेर्विनाशदर्शनाच्च ॥ २२ ॥

तेषां सर्वेषामेवेन्द्रियाणामुत्पत्तिरस्ति—

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" ( मुण्ड० उ० २।१।३ ) इत्यादिश्रुतेः, वृद्धाद्यवस्थासु चक्षुरादीनामिव मनसोऽप्यपचया-दिना विनाशनिर्णयाच्चेत्यर्थः । तथा चोक्तं—

"दशकेन निवर्त्तन्ते मनः सर्वेन्द्रियाणि च"

इति । मनसो नित्यत्ववचनानि च प्रकृत्याख्यबीजपराणीति ॥ २२ ॥

गोलकजातमेवेन्द्रियमिति नास्तिकमतमपाकरोति—

( गोलकानाम् इन्द्रियत्वमतखण्डनम् ।— )

## अतीन्द्रियमिन्द्रियं, भ्रान्तानामधिष्ठाने ॥ २३ ॥

इन्द्रियं सर्वमतीन्द्रियं, न तु प्रत्यक्षं, भ्रान्तानामेव त्वधिष्ठाने गोलके तादात्म्येनेन्द्रियमित्यर्थः । अधिष्ठानमित्येव पाठः ॥ २३ ॥

एकमेवेन्द्रियं शक्तिभेदादखिलगुणकार्य्यकारीति मतमपाकरोति—

( इन्द्रियाणामेकत्ववादनिरसनम् ।— )

## शक्तिभेदेऽपि भेदसिद्धौ नैकत्वम् ॥ २४ ॥

एकस्यैवेन्द्रियस्य शक्तिभेदस्वीकारेऽपि इन्द्रियभेदः सिध्यति, शक्तीनामपीन्द्रियत्वात्; अतो नैकत्वमिन्द्रियस्येत्यर्थः ॥ २४ ॥

नन्वेकस्म.दहङ्काराद्नानाविधेन्द्रियोत्पत्तिकल्पनायां न्यायविरोधः? तत्राह—

( इन्द्रियोत्पत्तिविषये न्यायविरोधखण्डनम् ।— )

## न कल्पनाविरोधः प्रमाणदृष्टस्य ॥ २५ ॥

सुगमम् ॥ २५ ॥

एकस्यैव मुख्येन्द्रियस्य मनसोऽन्ये दश शक्तिभेदा इत्याह—

( मनस उभयात्मकत्वनिर्देशः ।— )

## उभयात्मकं मनः ॥ २६ ॥

ज्ञान-कर्मेन्द्रियात्मकं मन इत्यर्थः ॥ २६ ॥

उभयात्मकमित्यस्यार्थं स्वयं विवृणोति—

( मनस उभयात्मकत्वस्य अर्थनिर्देशः ।— )

## गुणपरिणामभेदान्नानात्वम्, अवस्थावत् ॥२७॥

यथैक एव नरः सङ्गवशान्नानात्वं भजते, कामिनीसङ्गात् कामुकः, विरक्तसङ्गाद्विरक्तः, अन्यसङ्गाच्चान्यः, एवं मनोऽपि चक्षुरादिसङ्गाच्चक्षुराद्येकीभावेन दर्शनादिवृत्तिविशिष्टतया नाना भवति; तत्र हेतुः, गुणेत्यादि—गुणानां सत्त्वादीनां परिणामभेदेषु सामर्थ्यादित्यर्थः। एतच्च "अन्यत्रमना अभूवं, नाश्रौषम्" ( बृह० उ० १।५।३ ) इत्यादिश्रुतिसिद्धाच्चक्षुरादीनां मनःसंयोगं विना व्यापाराक्षमत्वादनुमीयते ॥ २७ ॥

ज्ञान-कर्मेन्द्रिययोर्विषयमाह—

( ज्ञान-कर्मेन्द्रिययोः विषयनिर्देशः ।— )

## रूपादि-रसमलान्त उभयोः ॥ २८ ॥

अन्नरसानां मलः पुरीषादिः। तथा रूप-रस-गन्ध-स्पर्श-शब्दा वक्तव्या-

दातव्य-गन्तव्यानन्दयितव्योत्स्रष्टव्यास्तूभयोर्ज्ञान-कर्मेन्द्रिययोर्द्वे विषया इत्यर्थः । आनन्दयितव्यं चोपस्थस्योपस्थान्तरं विषय इति ॥ २८ ॥

यस्येन्द्रियस्य येनोपकारेणैतानीन्द्रियाणीत्युच्यते, तदुभयमाह—

( इन्द्रियाणामात्मनः करणत्वनिर्देशः ।— )

## द्रष्टृत्वादिरात्मनः करणत्वमिन्द्रियाणाम् ॥ २९ ॥

द्रष्टृत्वादिपञ्चकं वक्तृत्वादिपञ्चकं सङ्कल्पयितृत्वं चात्मनः पुरुषस्य दर्शनादिवृत्तौ करणत्वं त्विन्द्रियाणामित्यर्थः । ननु द्रष्टृत्व-श्रोतृत्वादिकं कदाचिदनुभवे पर्य्यवसानात् पुरुषस्याविकारिणोऽपि घटतां, वक्तृत्वादिकं क्रियामात्रं, तत् कथं कूटस्थस्य घटतामिति चेत् ? न, अयस्कान्तवत् सान्निध्यमात्रेण दर्शनादिवृत्तिकर्तृत्वस्यैवात्र द्रष्टृत्वादिशब्दार्थत्वात् । यथा हि महाराजः स्वयमव्याप्रियमाणोऽपि सैन्येन करणेन योद्धा भवति, आज्ञामात्रेण प्रेरकत्वात् ; तथा कूटस्थोऽपि पुरुषश्चक्षुराद्यखिलकरणैर्द्रष्टा वक्ता सङ्कल्पयिता चेत्येवमादिर्भवति, संयोगाख्यसान्निध्यमात्रेणैव तेषां प्रेरकत्वात्, अयस्कान्तमणिवदिति । कर्तृत्वं चात्र कारकचक्रप्रयोक्तृत्वं, करणत्वं क्रियाहेतुव्यापारवत्त्वं, तत्साधकतमत्वं वा, कुठारादिवत् । यत् तु शास्त्रेषु पुरुषे दर्शनादिकर्तृत्वं निषिध्यते, तदनुकूलकृतिमत्त्वं तत्तत्क्रियावत्त्वं वा । तथा चोक्तम्—

> "अत आत्मनि कर्तृत्वमकर्तृत्वं च संस्थितम् ।
> निरिच्छत्वादकर्त्ताऽसौ कर्त्ता सन्निधिमात्रतः ॥"

इति । अत एव कारकचक्रप्रयोक्तृताशक्तेरात्मस्वरूपतया द्रष्टृत्व-वक्तृत्वादिकमात्मनो नित्यमिति श्रूयते, "न द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" ( बृह० उ० ४।३।२३ ) "न वक्तुर्वक्तेर्विपरिलोपो विद्यते" ( बृह० उ० ४।३।२६ ) इत्यादिनेति । ननु प्रमाणविभागे प्रत्यक्षादिवृत्तीनामेव करणत्वमुक्तम्, अत्र कथमिन्द्रियस्योच्यते इति चेत् ? न, अत्र दर्शनादि-रूपासु चक्षुरादिद्वारकबुद्धिवृत्तिष्वेवेन्द्रियाणां करणत्ववचनात्, तत्र पुरुषनिष्ठे बोधाख्यफले वृत्तीनां करणत्वस्योक्तत्वादिति ॥ २९ ॥

इदानीमन्तःकरणत्रयस्यासाधारणवृत्तीराह—

( अन्तःकरणत्रयस्य असाधारणवृत्तिनिर्देशः।— )

## त्रयाणां स्वालक्षण्यम् ॥ ३० ॥

त्रयाणां महदहङ्कार-मनसां स्वालक्षण्य स्वं स्वं लक्षणमसाधारणी वृत्तिर्येषामिति मध्यमपदलोपी विग्रहः, तस्य भावस्तत्त्वमित्यर्थः। लोके च महतो लक्षणमध्यवसायादिप्रकृष्टगुणवत्त्वम्। अहङ्कारस्य चात्मन्यविद्यमान-गुणारोपः। मनसश्च इदमश्विद्युपङ्गीकरणमिति; तथा च, बुद्धेर्वृत्तिरध्यव-सायः, अभिमानोऽहङ्कारस्य, सङ्कल्प विकल्पौ मनस इत्यायातम्। सङ्कल्प-श्चिकीर्षा, "सङ्कल्पः कर्म मानसम्" इत्यनुशासनात्; विकल्पश्च संशयः, श्रोगोक्तमप्रमतिविशेषो वा, न तु विशिष्टज्ञानं, तस्य बुद्धिवृत्तित्वादिति ॥ ३० ॥

त्रयाणां साधारणीं वृत्तिमप्याह—

( अन्तःकरणत्रयस्य साधारणवृत्तिनिर्देशः।— )

## सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ ३१ ॥

प्राणादिरूपाः पञ्च वायुवत् सञ्चारात् वायवो ये प्रसिद्धाः, ते सामान्या साधारणी करणस्यान्तःकरणत्रयस्य वृत्तिः परिणामभेदा इत्यर्थः। तदेतत् कारिकयोक्तं—

"स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या।
सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्चः॥" (ईश्व० का० २९)

इति। अत्र कश्चित् प्राणाद्या वायुविशेषा एव, ते चान्तःकरणवृत्त्या जीवनयोनिप्रयत्नरूपया व्याप्रियन्ते इति कृत्वा प्राणाद्याः करणवृत्ति-रित्यभेदनिर्देश इत्याह। तन्न; "न वायुक्रिये पृथगुपदेशात्" ( २।४।९ ) इति वेदान्तसूत्रेण प्राणस्य वायुत्व-वायुपरिणामत्वयोः स्फुटं प्रतिषेधा-दत्रापि तदेकवाक्यतौचित्यात्, मनोधर्मस्य कामादेः प्राणक्षोभकतया सामानाधिकरण्येनैवौचित्याच्च। वायु-प्राणयोः पृथगुपदेशश्रुतयस्तु—

"एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी॥" ( मुण्ड० २।१।३)

इत्याद्या इति। अत एव लिङ्गशरीरमध्ये प्राणानामगणनेऽपि न न्यूनता, बुद्धेरेव क्रियाशक्त्या सूत्रात्मप्राणादिनामकत्वादिति। अन्तःकरण-

परिणामेऽपि वायुनुच्चसञ्चारविशेषात् वायुदेवताऽधिष्ठितत्वाच्च वायुव्यव-हारोपपत्तिरिति ॥ ३१ ॥

वैशेषिकाणामिवास्माकं नायं नियमो यदिन्द्रियवृत्तिः क्रमेणैव भवति, नैकदेत्याह—

( इन्द्रियवृत्तौ क्रमाक्रमनियमाभावोक्तिः ।— )

## क्रमशोऽक्रमशश्चेन्द्रियवृत्तिः ॥ ३२ ॥

सुगमम् । जातिसाङ्कर्य्यस्यास्माकमदोषत्वात् सामग्रीसमवधाने सत्यनेकैरपीन्द्रियैरेकदैकवृत्त्युत्पादने बाधकं नास्तीति भावः । इन्द्रिय-वृत्तीनां विभागश्च कारिकया व्याख्यातः,—

"शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः ।
वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥"

आलोचनं च पूर्वाचार्य्यैर्व्याख्यातम्—

"अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम् ।
परं पुनस्तथा वस्तु-धर्मैर्जात्यादिभिस्तथा ॥"

इति । परमुत्तरकालीनं च पुनर्वस्तुधर्मैर्द्रव्यरूपधर्मैस्तथा जात्यादिभिर्ज्ञानं सविकल्पकं तथा आलोचनाख्यं भवति इत्यर्थः । तथा च, निर्विकल्पक-सविकल्पकरूपं द्विविधमप्यैन्द्रियकं ज्ञानमालोचनसंज्ञमिति लब्धम् । कश्चित् तु निर्विकल्पकं ज्ञानमेवालोचनमिन्द्रियजन्यं च भवति, सविकल्पकं तु मनोमात्रजन्यमिति श्लोकार्थमाह । तन्न ; योगभाष्ये व्यासदेवैर्विशिष्ट-ज्ञानस्यापि ऐन्द्रियकत्वस्य व्यवस्थापितत्वात्, इन्द्रियैर्विशिष्टज्ञाने बाधका-भावाच्च । स एव सूत्रार्थमप्येवं व्याचष्टे—"बाह्येन्द्रियमारभ्य बुद्धिपर्य्यन्तस्य वृत्तिरुत्सर्गतः क्रमेण भवति, कदाचित् तु व्याघ्रादि-दर्शनकाले भयविशेषात् विद्युल्लतेव सर्वकरणेष्वेकदैव वृत्तिर्भवतीत्यर्थः" इति । तदप्यसत् ; सूत्रे इन्द्रियवृत्तीनामेव क्रमिकाक्रमिकत्ववचनात् न बुद्ध्यहङ्कारवृत्त्योः प्रसङ्गोऽप्यस्ति । किञ्च, एकदा अनेकेन्द्रियवृत्तावेव वादिविप्रतिपत्त्या तन्निर्णयपरत्वमेव सूत्रस्योचितं मनोऽणुत्वप्रतिषेधाय, न तु काकदन्तान्वेषणपरत्वमिति ॥ ३२ ॥

पिण्डीकृत्य वृत्तीः संसारनिदानताप्रतिपादनार्थमादौ दर्शयति—

( वृत्तीनां पञ्चविधत्वनिर्देशः ।— )

## वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ॥ ३३ ॥

क्लिष्टा अक्लिष्टा वा भवन्तु, वृत्तयः पञ्चतय्यः पञ्चप्रकारा एव, नाधिका इत्यर्थः । क्लिष्टा दुःखदाः सांसारिकवृत्तयः, अक्लिष्टाश्च तद्विपरीता योगकालीनवृत्तयः । वृत्तीनां पञ्चप्रकारत्वं पातञ्जलसूत्रेणोक्तं—"प्रमाण-विपर्य्यय-विकल्प-निद्रा-स्मृतयः" (समा० पा० ६) इति । तत्र प्रमाणवृत्ति-रुक्ताप्युक्ता । विपर्य्ययस्त्वस्माकं विवेकाग्रह एव, अन्यथाख्यातेर्निरास्यत्वात् । विकल्पस्तु विशेषदर्शनकालेऽपि राहोः शिरः पुरुषस्य चैतन्यमित्यादि-ज्ञानम् । निद्रा च सुषुप्तिकालीना बुद्धिवृत्तिः । स्मृतिश्च संस्कारजन्यं ज्ञानमिति । एतत् सर्वं पातञ्जले सूत्रितम् ॥ ३३ ॥

या एता बुद्धिवृत्तय उक्ताः, एतदौपाधिक्येव पुरुषस्यान्यरूपता, न स्वतः; एतन्निवृत्तौ च पुरुषः स्वरूपेऽवस्थितो भवतीत्यनयाऽपि दिशा पुरुषस्य स्वरूपं परिचाययति—

( पुरुषस्य स्वरूपनिर्देशः ।— )

## तन्निवृत्तावुपशान्तोपरागः स्वस्थः ॥ ३४ ॥

तासां वृत्तीनां विरामदशायां शान्ततत्प्रतिविम्बकः स्वस्थो भवति कैवल्ये इवान्यदाऽपीत्यर्थः । तथा च योगसूत्रत्रय—"योगश्चित्तवृत्ति-निरोधः" ( समा० पा० २ ) "तदा द्रष्टुः स्वरूपेऽवस्थानम्" ( समा० पा० ३ ) "वृत्तिसारूप्यमितरत्र" ( समा० पा० ४ ) इति । इदमेव च पुरुषस्य स्वस्थत्वं यत्, उपाधिवृत्तेः प्रतिविम्बस्य निवृत्तिरिति । एतादृशी चावस्था पुरुषस्य वासिष्ठे दृष्टान्तेन प्रदर्शिता । यथा—

> "अनाप्ताखिलशैलादि-प्रतिविम्बे हि यादृशी ।
> स्यात् दर्पणे दर्पणता केवलात्मस्वरूपिणी ॥
> अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसम्भ्रमे ।
> स्यात् तादृशी केवलता स्थिते द्रष्टर्य्यवीक्षणे ॥"

इति ॥ ३४ ॥

एतदेव दृष्टान्तेन विवृणोति—

( वृत्तिविरामे पुरुषस्य स्वस्थताप्रतिपादने दृष्टान्तः ।— )

## कुसुमवच्च मणिः ॥ ३५ ॥

चकारो हेतौ ; कुसुमेनेव मणिरित्यर्थः । यथा जपाकुसुमेन स्फटिक-मणिः रक्तोऽच्छोऽस्वस्था भवति, तन्निवृत्तौ च रागशून्यः स्वस्थो भवति, तद्वदिति । तदेतदुक्तं कौर्मे—

"यथा संलक्ष्यते रक्तः केवलः स्फटिको जनैः ।
रञ्जकाद्युपधानेन तद्वत् परमपूरुषः ॥"

इति ॥ ३५ ॥

ननु कस्य प्रयत्नेन करणजातं प्रवर्त्ततां, पुरुषस्य कूटस्थत्वादीश्वरस्य च प्रतिषिद्धत्वादिति ? तत्राह—

( करणानां प्रवृत्तौ हेतुनिर्देशः ।— )

## पुरुषार्थं करणोद्भवोऽप्यदृष्टोल्लासात् ॥ ३६ ॥

प्रधानप्रवृत्तिवत् पुरुषार्थं करणोद्भवः ; करणानां प्रवृत्तिरपि पुरुष-स्यादृष्टाभिव्यक्तेरेव भवतीत्यर्थः । अदृष्टं चोपाधेरेव ॥ ३६ ॥

परार्थं स्वतः प्रवृत्तौ दृष्टान्तमाह—

( करणानां स्वतः प्रवृत्तौ दृष्टान्तनिर्देशः ।— )

## धेनुवत् वत्साय ॥ ३७ ॥

यथा वत्सार्थं धेनुः स्वयमेव क्षीरं स्रवति, नान्यं यत्नमपेक्षते, तथैव स्वामिनः पुरुषस्य कृते स्वयमेव करणानि प्रवर्त्तन्ते इत्यर्थः । दृश्यते च सुषुप्तात् स्वयमेव बुद्धेरुत्थानमिति । एतदेव कारिकयाऽप्युक्तं—

"स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् ।
पुरुषार्थ एव हेतुर्न केनचित् कार्य्यते करणम् ॥"

इति ॥ ३७ ॥

बाह्याभ्यन्तरैर्मिलित्वा कियन्ति करणानि ? इत्याकाङ्क्षायामाह—

( करणानां सङ्ख्यानिर्देशः ।— )

## करणं त्रयोदशविधमवान्तरभेदात् ॥ ३८ ॥

अन्तःकरणत्रयं, दश बाह्यकरणानि, मिलित्वा त्रयोदश ; तेष्वपि

व्यक्तिभेदेनानन्त्यं प्रतिपादयितुं विधमित्युक्तम्। बुद्धिरेव मुख्यं करण-मित्याशयेनोक्तम् अवान्तरभेदादिति एकस्यैव बुद्ध्याख्यकरणस्य करणा-नामनेकत्वादित्यर्थः॥ ३८॥

ननु बुद्धिरेव पुरुषेऽर्थसमर्पकत्वान्मुख्यं करणम्, अन्येषां च करणत्वं गौणं, तत्र को गुणः? इत्याकाङ्क्षायामाह—

( बुद्धिव्यतिरिक्तानां करणानां गौणत्वकथनम्।— )

## इन्द्रियेषु साधकतमत्वगुणयोगात्, कुठारवत्॥ ३९॥

इन्द्रियेषु पुरुषार्थसाधकतमत्वरूपः करणस्य बुद्धेर्गुणः परम्परया अस्ति, अतस्तयोदशविधं करणमुपपद्यते इति पूर्वसूत्रेणान्वयः। कुठारवदिति—यथा फलायोगव्यवच्छिन्नतया प्रहारस्यैव छिदायां मुख्यकरणत्वेऽपि प्रकृष्टसाधनत्वगुणयोगात् कुठारस्यापि करणत्वं, तथेत्यर्थः। अन्तःकरण-स्यैकत्वमभिप्रेत्याहङ्कारस्य गौणकरणत्वमत्र नोक्तम्॥ ३९॥

गौणमुख्यभावे व्यवस्थां विशिष्याह—

( करणेषु बुद्धेः प्राधान्यनिर्देशः।— )

## द्वयोः प्रधानं मनः, लोकवत् भृत्यवर्गेषु॥ ४०॥

द्वयोर्बाह्यान्तरयोर्मध्ये मनो बुद्धिरेव प्रधानं मुख्यं, साक्षात् करण-मिति यावत, पुरुषेऽर्थसमर्पकत्वात्। यथा भृत्यवर्गेषु मध्ये कश्चिदेव लोको राज्ञः प्रधानो भवति, अन्ये च तदुपसर्जनीभूता ग्रामाध्यक्षादयः, तद्वदित्यर्थः। अत्र मनःशब्दो न तृतीयान्तःकरणवाची, वक्ष्यमाणस्य अखिलसंस्काराधारत्वस्य बुद्ध्यतिरिक्तेष्वसम्भवात्, सम्भवे वा बुद्धि-कल्पनवैयर्थ्यादिति॥ ४०॥

बुद्धेः प्रधानत्वे हेतूनाह त्रिभिः सूत्रैः,—

( बुद्धेः प्रधानकरणत्वे हेतुनिर्देशः।— )

## अव्यभिचारात्॥ ४१॥

सर्वकरणव्यापकत्वात् फलाव्यभिचाराद्वेत्यर्थः॥ ४१॥

( बुद्धेः प्रधानकरणत्वे हेत्वन्तरनिर्देशः ।— )

## तथाऽशेषसंस्काराधारत्वात् ॥ ४२ ॥

बुद्धेरेवाखिलसंस्काराधारता, न तु चक्षुरादेरहङ्कार-मनसोर्वा, पूर्वं-दृष्ट-श्रुताद्यर्थानामन्ध-बधिरादिभिः स्मरणानुपपत्तेः, तत्त्वज्ञानेनाहङ्कार-मनसोर्लयेऽपि स्मरणदर्शनाच्च ; अतोऽशेषसंस्काराधारतयाऽपि बुद्धेरेव सर्वेभ्यः प्रधानत्वमित्यर्थः ॥ ४२ ॥

( बुद्धेः प्रधानकरणत्वे हेत्वन्तरनिर्देशः ।— )

## स्मृत्याऽनुमानाच्च ॥ ४३ ॥

स्मृत्या चिन्तनरूपया वृत्त्या प्राधान्यानुमानाच्चेत्यर्थः । चिन्ता वृत्तिर्हि ध्यानाख्या सर्ववृत्तिभ्यः श्रेष्ठा, तदाश्रयतया च चिन्ताऽपरनाम्नी बुद्धिरेव श्रेष्ठा अन्यवृत्तिकरणेभ्य इत्यर्थः ॥ ४३ ॥

ननु चिन्तावृत्तिः पुरुषस्यैवास्तु ? तत्राह—

( चिन्तावृत्तेः स्वतः पुरुषानिष्ठत्वोक्तिः ।— )

## सम्भवेन्न स्वतः ॥ ४४ ॥

स्वतः पुरुषस्य स्मृतिर्न सम्भवेत्, कूटस्थत्वादित्यर्थः । इत्थं वा व्याख्येयं —नन्वेवं बुद्धिरेव करणमस्तु, अलमवान्तरकरणैः ? इत्याशङ्कायामाह—सम्भवेन्न स्वत इति । चक्षुरादिद्वारतां विना अखिलव्यापारेषु बुद्धेः स्वतः करणत्वं न सम्भवेत्, अन्धादेरपि रूपादिदर्शनापत्ते-रित्यर्थः ॥ ४४ ॥

नन्वेवं बुद्धेरेव प्राधान्ये कथं मनस उभयात्मकत्वं प्रागुक्तम् ? तत्राह—

मनस उभयात्मकत्वोक्तौ हेतुनिर्देशः ।— )

## आपेक्षिको गुणप्रधानभावः, क्रियाविशेषात् ॥ ४५ ॥

क्रियाविशेषं प्रति करणानामापेक्षिको गुणप्रधानभावः ; चक्षुरादि-व्यापारेषु मनः प्रधानं, मनोव्यापारे चाहङ्कारः, अहङ्कारव्यापारे च बुद्धिः प्रधानम् ॥ ४५ ॥

नन्वस्य पुरुषस्येयं बुद्धिरेव करणं, न बुद्ध्यन्तरमित्येवं व्यवस्था किन्नि-मित्तिका ? इत्याकाङ्क्षायामाह—

( पुरुषविशेषे बुद्धिविशेषस्य व्यवस्थितकरणत्वे हेतुनिर्देशः ।— )

**तत्कर्मार्जितत्वात् तदर्थमभिचेष्टा, लोकवत् ॥४६॥**

तत्पुरुषीयकर्मजन्यत्वात् करणस्य तत्पुरुषार्थमभिचेष्टा सर्वव्यापारो भवति, लोकवत्; यथा लोके येन पुरुषेण अर्थादिकर्मणा अर्जितो यः कुठारादिः, तत्पुरुषार्थमेव तस्य छिदादिव्यापार इत्यर्थः; अतः करणव्यवस्थेति भावः। यद्यपि कूटस्थतया पुरुषे कर्म नास्ति, तथाऽपि भोगसाधनतया पुरुषस्वामिकत्वेन राज्ञो जयादिवदेव पुरुषस्य कर्मोच्यते। ननु कर्मण एव तत्पुरुषीयत्वे किं नियामकम? इति चेत्, तथाविधं कर्मान्तरमेव; अनादित्वात् तु नानवस्थादोषायेति। यत् तु कश्चिदविवेकी वदति, बुद्धिप्रतिबिम्बितपुरुषस्य कर्मेति तन्न; योगभाष्येऽस्मदुक्तप्रकारस्यैवोक्तत्वेनान्यप्रकारस्याप्रामाणिकत्वात्, प्रतिबिम्बस्यावस्तुत्वेन कर्माद्यसम्भवाच्च; अन्यथा प्रतिबिम्बस्य कर्म-तद्भोगाद्यङ्गीकारे बिम्बत्वाभिमतपुरुषकल्पनावैयर्थ्यस्य पूर्वं प्रतिपादितत्वादिति ॥ ४६ ॥

बुद्धेः प्राधान्यं प्रकटीकर्तुमुपसंहरति—

( बुद्धेः प्रधानकरणत्वोक्तेरुपसंहारः ।— )

**समानकर्मयोगे बुद्धेः प्राधान्यं, लोकवत् लोकवत् ॥ ४७ ॥**

यद्यपि पुरुषार्थत्वेन समान एव सर्वेषां करणानां व्यापारः, तथाऽपि बुद्धेरेव प्राधान्यं लोकवत्। लोके हि राजार्थकत्वाविशेषेऽपि ग्रामाध्यक्षादिषु मध्ये मन्त्रिण एव प्राधान्यं, तद्वदित्यर्थः; अत एव बुद्धिरेव महानिति सर्वशास्त्रेषु गीयते इति। वीप्सा अध्यायसमाप्तौ ॥ ४७ ॥

लिङ्गदेहस्य घटकं यत् सप्तदशसङ्ख्यकम्।
प्रधानकार्यं तत् सूक्ष्ममत्राध्यायेऽनुवर्णितम् ॥

इति श्रीविज्ञानाचार्यनिर्मिते कापिलसाङ्ख्यप्रवचनस्य
भाष्ये प्रधानकार्याध्यायो द्वितीयः ॥ २ ॥

# तृतीयोऽध्यायः ।

इतः परं प्रधानस्य स्थूलकार्य्यं महाभूतानि शरीरद्वयं च वक्तव्यं, ततश्च विविधयोनिगत्यादयो ज्ञानसाधनानुष्ठानहेतुपरवैराग्यार्थं, ततश्च परवैराग्याय ज्ञानसाधनान्यखिलानि वक्तव्यानीति तृतीयारम्भः ।

( महाभूतारम्भोक्तिः ।— )

## अविशेषाद्विशेषारम्भः ॥ १ ॥

नास्ति विशेषः शान्त-घोर-मूढत्वादिरूपो यत्रेत्यविशेषो भूतसूक्ष्मं पञ्चतन्मात्राख्यं, तस्मात् शान्तादिरूपविशेषवत्त्वेन विशेषाणां स्थूलानां महाभूतानामारम्भ इत्यर्थः । सुखाद्यात्मकता हि शान्तादिरूपा स्थूलभूतेष्वेव तारतम्यादिभिरभिव्यज्यते, न सूक्ष्मेषु, तेषां शान्तैकरूपतयैव योगिष्वभिव्यक्तेरिति ॥ १ ॥

तदेवं पूर्वाध्यायमारभ्य त्रयोविंशतितत्त्वानामुत्पत्तिमुक्त्वा तस्माच्छरीरद्वयोत्पत्तिमाह—

( त्रयोविंशतितत्त्वात् शरीरद्वयारम्भोक्तिः ।— )

## तस्माच्छरीरस्य ॥ २ ॥

तस्मात् त्रयोविंशतितत्त्वात् स्थूल-सूक्ष्मशरीरद्वयस्यारम्भ इत्यर्थः ॥ २ ॥

सम्प्रति त्रयोविंशतितत्त्वे संसारान्यथाऽनुपपत्तिं प्रमाणयति—

( त्रयोविंशतितत्त्वात् पुरुषस्य संसृतिनिर्देशः ।— )

## तद्बीजात् संसृतिः ॥ ३ ॥

तस्य शरीरस्य बीजात् त्रयोविंशतितत्त्वरूपात् सूक्ष्माद्धेतोः पुरुषस्य संसृतिर्गतागते भवतः, कूटस्थस्य विभुतया स्वतो गत्याद्यसम्भवादित्यर्थः । त्रयोविंशतितत्त्वेऽवस्थितो हि पुरुषस्तेनैवोपाधिना पूर्वकृतकर्मभोगार्थं देहात् देहं संसरति,

"मानसं मनसैवायमुपभुङ्क्ते शुभाशुभम् ।
वाचा वाचा कृतं कर्म कायेनैव तु कायिकम् ॥"

इत्यादिस्मृतिभिः पूर्वसर्गीयकरणैरेवोत्सर्गतः सर्गान्तरेषूपभोगसिद्धेः; अत एव ब्रह्मसूत्रमुपसंहरति—"सम्परिष्वक्तः" (३।१।१) इति ॥ ३ ॥

संसृतेरवधिमप्याह—

(संसृतेरवधिनिर्देशः।—)

## आ-विवेकाच्च प्रवर्त्तनमविशेषाणाम् ॥ ४ ॥

ईश्वरानीश्वरत्वादिविशेषरहितानां सर्वेषामेव पुंसां विवेकपर्य्यन्तमेव प्रवर्त्तनं संसृतिरावश्यकी, विवेकोत्तरं च न सेत्यर्थः ॥ ४ ॥

तत्र हेतुमाह—

(संसृतेर्हेतुनिर्देशः।—)

## उपभोगादितरस्य ॥ ५ ॥

इतरस्याविवेकिन एव स्वीयकर्मफलभोगावश्यम्भावादित्यर्थः ॥ ५ ॥

देहसत्त्वेऽपि संसृतिकाले भोगो नास्तीत्याह—

(संसृतिकालेऽपि भोगाभावोक्तिः।—)

## सम्प्रति परिमुक्तो द्वाभ्याम् ॥ ६ ॥

सम्प्रति संसृतिकाले पुरुषो द्वाभ्यां शीतोष्ण-सुख-दुःखादिद्वन्द्वैः परिमुक्तो भवतीत्यर्थः। तदेतत् कारिकयोक्तं—

"संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्"

इति। भावा धर्माधर्मवासनादयः ॥ ६ ॥

अतः परं शरीरद्वयं विभिद्य वक्तुमुपक्रमते—

(द्विविधशरीरनिर्देशः।—)

## मातापितृजं स्थूलं प्रायशः, इतरन्न तथा ॥ ७ ॥

स्थूलं मातापितृजं प्रायशो बाहुल्येन, अयोनिजस्यापि स्थूलशरीरस्य स्मरणात्। इतरच्च सूक्ष्मशरीरं न तथा न मातापितृजं, सर्गाद्युत्पन्नत्वात् इत्यर्थः। तदुक्तं कारिकया—

"पूर्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्य्यन्तम्।

संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥"

इति । नियतं नित्यं, द्विपरार्द्धस्थायि गौणनित्यं, प्रतिशरीरं लिङ्गोत्पत्ति-कल्पने गौरवात् । प्रलये तु तन्नाशः श्रुति-स्मृतिप्रामाण्यादिष्यते । गतिकाले भोगाभाववचनमुत्सर्गाभिप्रायेण. कदाचित् तु वायवीयशरीर-प्रवेशतो गमनकालेऽपि भोगो भवति ; अतो यममार्गे दुःखभोगवाक्या-न्युपपद्यन्ते ॥ ७ ॥

स्थूल-सूक्ष्मशरीरयोर्मध्ये किमुपाधिकः पुरुषस्य द्वन्द्वयोगः ? तदव-धारयति—

( सूक्ष्मशरीरस्य सुख-दुःखादिभोगोक्तिः ।— )

## पूर्वोत्पत्तेस्तत्कार्य्यत्वं, भोगादेकस्य, नेतरस्य ॥८॥

पूर्वं सर्गादावुत्पत्तिर्यस्य लिङ्गशरीरस्य तस्यैव तत्कार्य्यत्वं सुख-दुःख-कार्य्यकत्वं, कुतः ? एकस्य लिङ्गदेहस्यैव सुख-दुःखाख्यभोगात्, न त्वितरस्य स्थूलशरीरस्य, मृतशरीरे सुख-दुःखाद्यभावस्य सर्वसम्मतत्वादित्यर्थः ॥ ८ ॥

उक्तस्य सूक्ष्मशरीरस्य स्वरूपमाह—

( सूक्ष्मदेहस्य स्वरूपम् ।— )

## सप्तदशैकं लिङ्गम् ॥ ९ ॥

सूक्ष्मशरीरमष्टाधाराधेयभावेन द्विविधं भवति, तत्र सप्तदश मिलित्वा लिङ्गशरीरं, तच्च सर्गादौ समष्टिरूपमेकमेव भवतीत्यर्थः । एकादशेन्द्रि-याणि, पञ्चतन्मात्राणि, बुद्धिश्चेति सप्तदश ; अहङ्कारस्य बुद्धावेवान्तर्भावः । चतुर्थसूत्रवक्ष्यमाणप्रमाणादेतान्येव सप्तदश लिङ्गं मन्तव्यं, न तु सप्तदशमेकं चेत्यष्टादशतया व्याख्येयम्, उत्तरसूत्रेण व्यक्तिभेदस्योपपाद्यतया अत्र लिङ्गैकत्वे एकशब्दस्य तात्पर्य्यावधारणाच्च,

"कर्मात्मा पुरुषो योऽसौ बन्धमोक्षैः प्रयुज्यते ।

स सप्तदशकेनापि राशिना युज्यते च सः ॥"

इति मोक्षधर्मादौ लिङ्गशरीरस्य सप्तदशत्वसिद्धेश्च । सप्तदश अवयवा अत्र सन्तीति सप्तदशको राशिरित्यर्थः । राशिशब्देन स्थूलदेहवल्लिङ्गदेहस्य अवयवित्वं निराकृतम्, अवयविरूपेण द्रव्यान्तरकल्पनायां गौरवात् । स्थूलदेहस्य चावयवित्वमेकतादिप्रत्ययानुरोधेन कल्प्यते इति । अत्र च लिङ्गदेहे बुद्धिरेव प्रधानेत्याशयेन लिङ्गदेहस्य भोगः प्रागुक्तः । प्राणश्चान्त-

करणस्यैव वृत्तिभेदः ; अतो लिङ्गदेहे प्राणपञ्चकस्याप्यन्तर्भाव इति । अस्य सप्तदशावयवकस्य शरीरत्वं स्वयं वक्ष्यति "लिङ्गशरीरनिमित्तक इति सनन्दनाचार्य्यः" (६।६९) इति सूत्रेण ; अतो भोगायतनत्वमेव मुख्यं शरीरलक्षणं, तदाश्रयतया त्वन्यत्र शरीरत्वमिति पश्चाद्व्यक्तीभविष्यति । "चेष्टेन्द्रियार्थाश्रयः शरीरम्" इति तु न्यायेऽपि तस्यैव लक्षणं कृतमिति ॥ ९ ॥

ननु लिङ्गं चेदेकं, तर्हि कथं पुरुषभेदेन विलक्षणा भोगाः स्युः? तत्राह—

(लिङ्गैक्येऽपि पुरुषभेदे भोगवैलक्षण्ये हेतुनिर्देशः ।—)

## व्यक्तिभेदः कर्मविशेषात् ॥ १० ॥

यद्यपि सर्गादौ हिरण्यगर्भोपाधिरूपमेकमेव लिङ्गं, तथाऽपि तस्य पश्चाद्व्यक्तिभेदो व्यक्तिरूपेणांशतो नानात्वमपि भवति, यथेदानीमेकस्य पितृलिङ्गदेहस्य नानात्वमंशतो भवति पुत्र-कन्यादिलिङ्गदेहरूपेण । तत्र कारणमाह, कर्मविशेषादिति जीवान्तराणां भोगहेतुकर्मादेरित्यर्थः । अत्र विशेषवचनात् समष्टिसृष्टिर्जीवानां साधारणैः कर्मभिर्भवतीत्यायातम् । अयं च व्यक्तिभेदो मन्वादिष्वप्युक्तः ; यथा मनौ समष्टिपुरुषस्य षडिन्द्रियोत्पत्त्यनन्तरं,

> "तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम् ।
> सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे ॥"

इति । षण्णामिति समस्तलिङ्गशरीरोपलक्षणम् । आत्ममात्रासु चिदंशेषु संयोज्येत्यर्थः । तथा च तत्रैव वाक्यान्तरं—

> "तच्छरीरसमुत्पन्नैः कार्य्यैस्तैः करणैः सह ।
> क्षेत्रज्ञाः समजायन्त गात्रेभ्यस्तस्य धीमतः ॥"

इति ॥ १० ॥

नन्वेवं भोगायतनतया लिङ्गस्यैव शरीरत्वे स्थूले कथं शरीरव्यवहारः? तत्राह—

(स्थूलदेहस्य शरीरत्वोक्तौ हेतुनिर्देशः ।—)

## तदधिष्ठानाश्रये देहे तद्वादात् तद्वादः ॥ ११ ॥

तस्य लिङ्गस्य यदधिष्ठानमाश्रयो वक्ष्यमाणभूतपञ्चकं, तस्याऽर्थे षाट्कौशिकदेहे तद्वादो देहवादः, तद्वादात् तस्याधिष्ठानशब्दोक्तस्य देहवादादित्यर्थः, लिङ्गसम्बन्धादधिष्ठानस्य देहत्वम्, अधिष्ठानाश्रयत्वाच्च स्थूलस्य देहत्वमिति पर्य्यवसितोऽर्थः । अधिष्ठानशरीरं च सूक्ष्मं पञ्चभूतात्मकं वक्ष्यते ; तथा च शरीरत्रय सिद्धम् । यत् तु—

"आतिवाहिक एकोऽस्ति देहोऽन्यस्त्वाधिभौतिकः ।
सर्वासां भूतजातीनां ब्रह्मणस्त्वेक एव किम् ॥"

इत्यादिशास्त्रेषु शरीरद्वयमेव श्रूयते, तत् लिङ्गशरीराधिष्ठानशरीरयोरन्योऽन्यनियतत्वेन सूक्ष्मत्वेन चैकताऽभिप्रायादिति ॥ ११ ॥

ननु षाट्कौशिकातिरिक्ते लिङ्गशरीराधिष्ठानभूते शरीरान्तरे किं प्रमाणम् ? इत्याकाङ्क्षायामाह—

( लिङ्गशरीराधिष्ठानस्य शरीरान्तरस्य अस्तित्वे युक्तिप्रदर्शनम् ।— )

## न स्वातन्त्र्यात् तदृते छायावच्चित्रवच्च ॥ १२ ॥

तल्लिङ्गशरीरं तदृतेऽधिष्ठानं विना स्वातन्त्र्यान्न तिष्ठति ; यथा छाया निराधारा न तिष्ठति, यथा वा चित्रमित्यर्थः, तथा च स्थूलदेहं त्यक्त्वा लोकान्तरगमनाय लिङ्गदेहस्याधारभूतं शरीरान्तरं सिध्यतीति भावः । तस्य च स्वरूपं कारिकायामुक्तं—

"सूक्ष्मा माता-पितृजाः सहप्रभूतैस्त्रिधा विशेषाः स्युः ।
सूक्ष्मास्तेषां नियता माता-पितृजा निवर्त्तन्ते ॥"

( ईश्व० क० ३९ ) इति । अत्र तन्मात्रकार्य्यं माता-पितृजशरीरापेक्षया सूक्ष्मं यत् भूतपञ्चकं यावल्लिङ्गस्थायि प्रोक्तं, तदेव लिङ्गाधिष्ठानं शरीरमिति लब्धं कारिकाऽन्तरेण—

"चित्रं यथाऽऽश्रयमृते स्थाण्वादिभ्यो विना यथा छाया ।
तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥" ( ईश्व० क० ४१ )

इति । विशेषैः स्थूलभूतैः सूक्ष्माख्यैः, स्थूलावान्तरभेदैरिति यावत् । अस्यां कारिकायां सूक्ष्माख्यानां स्थूलभूतानां लिङ्गशरीराद्भेदावगमेन

"पूर्वोत्पन्नमसक्तं नियतं महदादि-सूक्ष्मपर्य्यन्तम्"

इत्यादिपूर्वोदाहृतकारिकायां सूक्ष्मभूतपर्य्यन्तस्य लिङ्गत्वं नार्थः,

किन्तु महदादिरूपं यल्लिङ्गं तत् स्वाधारसूक्ष्मपर्य्यन्तं संसरति तेन सह संसरतीत्यर्थः। नन्वेवं लिङ्गघटकपदार्थाः कियन्त इति कथमवधार्य्य-मिति चेत् ?

"वासना भूतसूक्ष्मं च कर्म-विद्ये तथैव च।
दशेन्द्रियं मनो बुद्धिरेतल्लिङ्गं विदुर्बुधाः॥"

इति वाशिष्ठादिवाक्येभ्यः। अत्र लिङ्गशरीरप्रतिपादनेनैव पुर्य्यष्टक-मपि व्याख्येयमित्याशयेन बुद्धिधर्माणामपि वासना-कर्म-विद्यानां पृथगुप-न्यासः। भूतसूक्ष्मं चात्र तन्मात्रा दशेन्द्रियाणि च ज्ञान-कर्मेन्द्रिय-भेदेन पुरद्वयमित्याशयः। यत् तु मायावादिनो लिङ्गशरीरस्य तन्मात्र-स्थाने प्राणादिपञ्चकं प्रक्षिपन्ति, पुर्य्यष्टकं चान्यथा कल्पयन्ति, तदप्रामा-णिकमिति॥ १२॥

ननु मूर्त्तद्रव्यतया वाय्वादेरिव लिङ्गस्याकाशमेवासङ्गेनाधारोऽस्तु, व्यर्थ-मन्यत्र सङ्कल्पनमिति ? तत्राह—

(लिङ्गशरीरस्य स्वतन्त्रतया अवस्थानाभावे हेतुप्रदर्शनम्।—)

## मूर्त्तत्वेऽपि न, सङ्घातयोगात् तरणिवत्॥ १३॥

मूर्त्तत्वेऽपि न स्वातन्त्र्यादसङ्गतया अवस्थानं, प्रकाशरूपत्वेन सूर्य्यस्येव सङ्घातसङ्गानुमानादित्यर्थः। सूर्य्यादीनि सर्वाणि तेजांसि पार्थिव-द्रव्यसङ्गेनैवावस्थितानि दृश्यन्ते, लिङ्गं च सत्त्वप्रकाशमयम्, अतो भूतसङ्गत-मिति॥ १३॥

लिङ्गस्य परिमाणमवधारयति—

(लिङ्गदेहस्य परिमाणनिर्देशः।—)

## अणुपरिमाणं तत्, कृतिश्रुतेः॥ १४॥

तल्लिङ्गमणुपरिमाणं परिच्छिन्नं, न त्वत्यन्तमेवाणु, सावयवस्योक्तत्वात्। कुतः ? कृतिश्रुतेः क्रियाश्रुतेः,

"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च"

(तैत्तिरी० २।५।१) इत्यादिश्रुतेर्विज्ञानाख्यबुद्धिप्रधानतया विज्ञानस्य लिङ्गस्याखिलकर्मश्रवणादित्यर्थः। विभुत्वे सति क्रिया न सम्भवति। "तत् गतिश्रुतेः" इति पाठस्तु समीचीनः। लिङ्गशरीरस्य च गति-

श्रुतिः,—"तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति, सविज्ञानो भवति, सविज्ञानमेवान्ववक्रामति" ( बृह० उ० ४।४।२ ) इति। सविज्ञानो बुद्धिसहित एव जायते, सविज्ञानं यथा स्यात् तथा संसरति चेत्यर्थः ॥ १४ ॥

परिच्छिन्नत्वे युक्त्यन्तरमाह—

( लिङ्गदेहस्य परिमाणवत्त्वे युक्त्यन्तरम् ।— )

## तदन्नमयत्वश्रुतेश्च ॥ १५ ॥

तस्य लिङ्गस्यैकदेशतोऽन्नमयत्वश्रुतेर्न विभुत्वं सम्भवतीति, विभुत्वे सति नित्यताऽऽपत्तेरित्यर्थः। सा च श्रुतिर्हि "अन्नमयं हि सौम्य ! मनः, आपोमयः प्राणः, तेजोमयी वाक्" ( छान्दो० ६।५।४ ) इत्यादिः। यद्यपि मन-आदीनि न भौतिकानि, तथाऽप्यन्नसंसृष्टसजातीयांशपूरणादन्नमयत्वादिव्यवहारो बोध्यः ॥ १५ ॥

अचेतनानां लिङ्गानां किमर्थं संसृतिर्देहाद्देहान्तरसञ्चारः ? इत्याशङ्कायामाह—

( लिङ्गशरीराणां संसृतौ हेतुनिर्देशः ।— )

## पुरुषार्थं संसृतिर्लिङ्गानां, सूपकारवत् राज्ञः ॥ १६ ॥

यथा राज्ञः सूपकाराणां पाकशालासु सञ्चारो राजार्थं, तथा लिङ्गशरीराणां संसृतिः पुरुषार्थमित्यर्थः ॥ १६ ॥

लिङ्गशरीरमशेषविशेषतो विचारितम्, इदानीं स्थूलशरीरमपि तथा विचारयति—

( स्थूलदेहस्य पाञ्चभौतिकत्वनिर्देशः ।— )

## पाञ्चभौतिको देहः ॥ १७ ॥

पञ्चानां भूतानां मिलितानां परिणामो देह इत्यर्थः ॥ १७ ॥

मतान्तरमाह—

( मतान्तरे स्थूलदेहस्य चातुर्भौतिकत्वोक्तिः ।— )

## चातुर्भौतिकमित्येके ॥ १८ ॥

आकाशस्यानारम्भकत्वमभिप्रेत्येदम् ॥ १८ ॥

( मतान्तरे स्थूलदेहस्य ऐकभौतिकत्वोक्ति ।— )

## ऐकभौतिकमित्यपरे ॥ १९ ॥

पार्थिवमेव शरीरम्, अन्यानि च भूतान्युपष्टम्भकमात्राणीति भावः । अथवैकभौतिकमेकैकभौतिकमित्यर्थः । मनुष्यादिशरीरे पार्थिवांशाधिक्येन पार्थिवता, सूर्य्यादिलोकेषु च तेज-आद्याधिक्येन तैजसादिता शरीराणां सुवर्णादीनामिवेति ; इममेव पक्षं पञ्चमाध्यायेऽपि सिद्धान्तयिष्यति ॥ १९ ॥

देहस्य भौतिकत्वेन यत् सिध्यति तदाह—

( भौतिकदेहे चैतन्यस्य औपाधिकत्वनिर्देश ।— )

## न सांसिद्धिकं चैतन्यं, प्रत्येकादृष्टेः ॥ २० ॥

भूतेषु पृथक् कृतेषु चैतन्यादर्शनाद्भौतिकस्य देहस्य न स्वाभाविकं चैतन्यं किन्त्वौपाधिकमित्यर्थः ॥ २० ॥

बाधकान्तरमाह—

( भौतिकदेहे चेतन्यस्य औपाधिकत्वनिर्देशे युक्त्यन्तरम् ।— )

## प्रपञ्चमरणाद्यभावश्च ॥ २१ ॥

प्रपञ्चस्य सर्वस्यैव मरण-सुषुप्त्याद्यभावश्च देहस्य स्वाभाविकचैतन्ये सति स्यादित्यर्थः । मरण-सुषुप्त्यादिकं हि देहस्याचेतनता, सा च स्वाभाविकचैतन्ये सति नोपपद्यते, स्वभावस्य यावद्द्रव्यभावित्वादिति ॥ २१ ॥

प्रत्येकादृष्टेरिति यदुक्तं, तत्राशङ्का परिहरति—

( भौतिकदेहे चैतन्यस्य औपाधिकत्वनिर्देशे आपत्तिखण्डनम् ।— )

## मदशक्तिवच्चेत् ? प्रत्येकपरिदृष्टे सांहत्ये तदुद्भवः ॥ २२ ॥

ननु यथा मादकता शक्तिः प्रत्येकद्रव्यावृत्तिरपि मिलितद्रव्ये वर्त्तते, एवं चैतन्यमपि स्यादिति चेत् ? न ; प्रत्येकपरिदृष्टे सति सांहत्ये तदुद्भवः सम्भवेत्, प्रकृते तु प्रत्येकपरिदृष्टत्वं नास्ति ; अतो दृष्टान्ते प्रत्येकं शास्त्रादिभिः सूक्ष्मतया मादकत्वे सिद्धे संहतभावकाले मादकत्वाविर्भावमात्रं सिध्यति ; दार्ष्टान्तिके तु प्रत्येकभूतेषु सूक्ष्मतया न केनापि प्रमाणेन

चैतन्यं सिद्धमित्यर्थः । ननु समुच्चिते चैतन्यदर्शनेन प्रत्येकभूते सूक्ष्मचैतन्य-शक्तिरनुमेयेति चेत् ? न ; अनेकभूतेष्वनेकचैतन्यशक्तिकल्पनायां गौरवेण लाघवादेकस्यैव नित्यचित्स्वरूपस्य कल्पनौचित्यात् । ननु यथा अवयवे-ऽवर्त्तमानमपि परिमाण-जलाहरणादिकार्य्यं घटादौ दृश्यते, एवमेव शरीरे चैतन्यं स्यादिति ? मैवम् ; भूतगतविशेषगुणानां सजातीयकारणगुण-जन्यतया कारणे चैतन्यं विना देहे चैतन्यासम्भवादिति ॥ २२ ॥

पुरुषार्थं संसृतिर्लिङ्गानामित्युक्तं, तत्र लिङ्गानां स्थूलदेहसञ्चाराख्य-जन्मनो यो यः पुरुषार्थो येन येन व्यापारेण सिध्यति, तदाह सूत्राभ्याम्—

( ज्ञानात् मुक्तिनिर्देशः ।— )

## ज्ञानान्मुक्तिः ॥ २३ ॥

लिङ्गसंसृतितो जन्मद्वारा विवेकसाक्षात्कारः,तस्मान्मुक्तिरूपः पुरुषार्थो भवतीत्यर्थः । ज्ञानादिकं च प्रत्ययसर्गतया कारिकायां परिभाषितम्—

"एष प्रत्ययसर्गो विपर्य्ययाशक्तितुष्टिसिद्ध्याख्यः" ( ईश्व० का० ४६ )

इति । विपर्य्ययादयो व्याख्यास्यन्ते । अत्र च स एव बुद्धिसर्गः प्रयोजन-योगेन सूत्रैरुच्यते इति विशेषः ॥ २३ ॥

( अज्ञानात् बन्धनिर्देशः ।— )

## बन्धो विपर्य्ययात् ॥ २४ ॥

विपर्य्ययात् सुख-दुःखात्मको बन्धरूपः पुरुषार्थो लिङ्गसंसृतितो भवतीत्यर्थः ॥ २४ ॥

ज्ञान-विपर्य्ययाभ्यां मुक्ति-बन्धावुक्तौ, तत्रादौ ज्ञानान्मुक्तिं विचारयति—

( ज्ञानात् मुक्तिप्राप्तिविषये विचारः ।— )

## नियतकारणत्वान्न समुच्चय-विकल्पौ ॥ २५ ॥

यद्यपि "विद्यां चाविद्यां च यस्तद्वेदोभयं सह" ( मैत्रे० उ० ७।९ ) इत्यादि श्रूयते, तथाऽप्यविवेकनिवृत्तौ लोकसिद्धतया ज्ञानस्य नियत-कारणत्वात् अविद्याख्यकर्मणा सह ज्ञानस्य मोक्षजनने समुच्चयो विकल्पो वा नास्तीत्यर्थः । "तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽय-

नाय" (श्वेताश्व० उ० ३।८) "न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्व-मानशुः" ( महानारा० उ० १०।५ ) इत्यादिश्रुतिभ्योऽपि कर्मणो न साक्षान्मोक्षहेतुत्वं, समुच्चयानुष्ठानं श्रुतिष्वङ्गाङ्गिभावादिभिरभ्युपपद्यते इति ॥ २५ ॥

समुच्चय-विकल्पयोरभावे दृष्टान्तमाह—

( ज्ञानात् मुक्तिप्राप्तौ समुच्चय-विकल्पाभावे दृष्टान्तप्रदर्शनम् ।— )

## स्वप्न-जागराभ्यामिव मायिकामायिकाभ्यां नोभयोर्मुक्तिः पुरुषस्य ॥ २६ ॥

यथा मायिकामायिकाभ्यां स्वप्न-जागरपदार्थाभ्यामन्योऽन्यसहकारि-भावेनैकः पुरुषार्थो न सम्भवति, एवमुभयोर्मायिकामायिकयोरनुष्ठितयोः कर्म-ज्ञानयोः पुरुषस्य मुक्तिरपि न युक्तेत्यर्थः । मायिकत्वं चासत्यत्वम्, अस्थिरत्वमिति यावत् ; तच्च स्वाप्नेऽर्थेऽस्ति । जाग्रत्पदार्थस्तु स्वाप्नापेक्षया सत्य एव, कूटस्थपुरुषापेक्षयैवास्थिरत्वेनासत्यत्वात् ; अतः स्वप्नविलक्षण-स्नानादिकार्य्यकरः । एवं कर्माप्यस्थिरत्वात् प्रकृतिकार्य्यत्वाच्च मायिकम् । आत्मा तु स्थिरत्वादकार्य्यत्वाच्चामायिकः ; अतस्तयोरनुष्ठितकर्म-ज्ञानयोः समानफलदातृत्वमयौक्तिकमिति विलक्षणमेव कार्य्यं युक्तम् ॥ २६ ॥

नन्वेवमप्यात्मोपासनाख्यज्ञानेन सह तत्त्वज्ञानस्य समुच्चय-विकल्पौ स्याताम्, उपास्यस्यामायिकत्वादिति ? तत्राह—

( उपासनाख्यज्ञानेन तत्त्वज्ञानस्य समुच्चय-विकल्पाभावः ।— )

## इतरस्यापि नात्यन्तिकम् ॥ २७ ॥

इतरस्याप्युपास्यस्य नात्यन्तिकममायिकत्वम्, उपास्यात्मन्यध्यस्तपदार्था-नामपि प्रवेशादित्यर्थः ॥ २७ ॥

उपासनस्य मायिकत्वं यस्मिन्नंशे तदाह—

( अंशविशेषे उपासनस्य मायिकत्वनिर्देशः ।— )

## सङ्कल्पितेऽप्येवम् ॥ २८ ॥

मनःसङ्कल्पिते ध्येयांशे एवमपि मायिकत्वमपीत्यर्थः । "सर्वं खल्विदं

ब्रह्म" ( छान्दो० ३।१४।१) इत्यादिश्रुत्युक्तं ह्युपास्ये प्रपञ्चांशस्य मायिकत्व-मेवेति ॥ २८ ॥

तर्ह्युपासनस्य किं फलम् ? इत्याकाङ्क्षायामाह—

( उपासनाया: फलम् ।— )

## भावनोपचयाच्छुद्धस्य सर्वं प्रकृतिवत् ॥ २९ ॥

भावनाख्योपासनानिष्पत्त्या शुद्धस्य निष्पापस्य पुरुषस्य प्रकृतेरिव सर्वमैश्वर्य्यं भवतीत्यर्थः। प्रकृतिर्यथा सृष्टि-स्थिति-संहारं करोति, एवमुपासकस्य बुद्धिसत्त्वमपि प्रकृतिप्रेरणेन सृष्ट्यादिकर्त्तृ भवतीति ॥ २९ ॥

ज्ञानमेव मोक्षसाधनमिति स्थापितम्, इदानीं ज्ञानसाधनान्याह—

( ज्ञानसाधनध्यानस्य रागोपघातहेतुत्वम् ।— )

## रागोपहतिर्ध्यानम् ॥ ३० ॥

ज्ञानप्रतिबन्धको यो विषयोपरागश्चित्तस्य तदुपघातहेतुर्ध्यानमित्यर्थः। उपचारेण कार्य्य-कारणयोरभेदनिर्देशः, रागक्षयस्य ध्यानत्वासम्भवात्। अत्र ध्यानशब्देन धारणा-ध्यान-समाधयो योगाङ्गास्त्रय एव ग्राह्याः, पातञ्जले योगाङ्गानामष्टानामेव विवेकसाक्षात्कारहेतुत्वश्रवणादिति। एतेषां चावान्तरविशेषास्तत्रैव द्रष्टव्याः। इतराणि च पञ्चाङ्गानि स्वयं वक्ष्यति ॥ ३० ॥

ध्याननिष्पत्त्यैव ज्ञानोत्पत्तिः, नारम्भमात्रेणेत्याशयेन ध्याननिष्पत्ति-लक्षणमाह—

( ध्यानसिद्धेरुपायनिर्देशः ।— )

## वृत्तिनिरोधात् तत्सिद्धिः ॥ ३१ ॥

ध्येयातिरिक्तवृत्तिनिरोधरूपेण सम्प्रज्ञातयोगेन तत्सिद्धिर्ध्यानस्य निष्पत्तिर्ज्ञानाख्यफलोपधानरूपा भवतीत्यर्थः; अतस्तावत्पर्य्यन्तमेव ध्यानं कर्त्तव्यमित्याशयः। इतरवृत्तिनिरोधे सत्येव विषयान्तरसञ्चाराख्यप्रति-बन्धापगमात् ध्येयसाक्षात्कारो भवतीति कृत्वा योगोऽपि ज्ञाने कारणं, योगाङ्गध्यानादिवदित्यपि मन्तव्यम्, "अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" ( कठ० २।१२ ) इत्यादिश्रुति-स्मृत्योस्तदव-गमादिति ॥ ३१ ॥

ध्यानस्यापि साधनान्याह—

( धारणादित्रयेण ध्यानसिद्धिः।— )

## धारणासन-स्वकर्मणा तत्सिद्धिः ॥ ३२ ॥

वक्ष्यमाणेन धारणादित्रयेण ध्यानं भवतीत्यर्थः ॥ ३२ ॥

धारणादित्रयं क्रमात् सूत्रत्रयेण लक्षयति—

( धारणायाः स्वरूपम्।— )

## निरोधश्छर्दि-विधारणाभ्याम् ॥ ३३ ॥

प्राणस्येति प्रसिद्ध्या लभ्यते। "प्रच्छर्दन-विधारणाभ्यां वा प्राणस्य" ( समा० पा० ३४ ) इति योगसूत्रे भाष्यकारेण प्राणायामस्य व्याख्यातत्वात्। छर्दिश्च वमनं, विधारणत्याग इति यावत्, तेन पूरणरेचनयोर्लाभः। विधारणं च कुम्भकम्; तथा च, प्राणस्य पूरक-रेचक-कुम्भकैर्यो निरोधो वशीकरणं, सा धारणेत्यर्थः। आसन-कर्मणोः स्वशब्देन पश्चाल्लक्षणीयतया सूत्रे परिशेषत एव धारणाया लक्ष्यत्व-लाभाद्धारणापदं नोपात्तम्। चित्तस्य धारणा तु समाधिवत् ध्यानशब्देनैव गृहीता इति ॥ ३३ ॥

क्रमप्राप्तमासनं लक्षयति—

( आसनस्य स्वरूपम्।— )

## स्थिरसुखमासनम् ॥ ३४ ॥

यत् स्थिरं सत् सुखसाधनं भवति स्वस्तिकादि, तदासनमित्यर्थः ॥३४॥

स्वकर्म लक्षयति—

( स्वकर्मणः स्वरूपम्।— )

## स्वकर्म स्वाश्रमविहितकर्मानुष्ठानम् ॥ ३५ ॥

सुगमम्। तत्र कर्मशब्देन यम-नियमयोर्ग्रहणम्; जितेन्द्रियत्वरूपः प्रत्याहारोऽपि सर्वाश्रमसाधारणतया कर्ममध्ये प्रवेशनीयः; तथा च, पातञ्जलसूत्रे ज्ञानसाधनतया प्रोक्तान्यष्टौ योगाङ्गान्यत्रापि लब्धानि। यथा तत् सूत्रं—"यम-नियमासन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-

समाधयोऽष्टावङ्गानि" ( साध० पा० २९ ) इति। तेषां च स्वरूपं तत्रैव द्रष्टव्यम् । ३५ ॥

मुख्याधिकारिणो नास्ति वहिरङ्गस्य यमादिपञ्चकस्यापेक्षा, केवलाद्धारणा-ध्यानादित्रयरूपात् संयमादेव ज्ञानं योगश्च भवतीति पातञ्जल-सिद्धान्तः। जड़भरतादिषु च तथा दृश्यतेऽपि; अतस्तदनुसारेणाचार्य्योऽप्याह—

( ज्ञानस्य तत्साधनयोगस्य च उपायनिर्देशः ।— )

## वैराग्यादभ्यासाच्च ॥ ३६ ॥

केवलाभ्यासात् ध्यानरूपादेव वैराग्यसहितात् ज्ञानं तत्साधनयोगश्च भवत्युत्तमाधिकारिणामित्यर्थः। तदुक्तं गारुड़ेऽपि —

"आसनस्थानविधयो न योगस्य प्रसाधकाः ।
विलम्बजननाः सर्वे विस्तराः परिकीर्त्तिताः ॥
शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात् ॥"

इति। अथवा वैराग्य ध्यानाभ्यासावत्र ध्यानस्यैव हेतुतयोक्तौ, च-कारश्च धारणासमुच्चयार्थ इति। तदेवं ज्ञानान्मोक्षो व्याख्यातः ॥ ३६ ॥

अतः परं "बन्धो विपर्य्ययात्" इत्युक्तो बन्धकारणं विपर्य्ययो व्याख्यास्यति, तत्रादौ विपर्य्ययस्य स्वरूपमाह—

( बन्धहेतुविपर्य्ययभेदाः ।— )

## विपर्य्ययभेदाः पञ्च ॥ ३७ ॥

अविद्याऽस्मिता-राग-द्वेषाभिनिवेशाः पञ्च योगोक्ता बन्धहेतुविपर्य्ययस्यावान्तरभेदा इत्यर्थः। तेन शुक्त्यादिज्ञानरूपाणां विपर्य्ययाणामसङ्ग्रहेऽपि न क्षतिः। तत्र अविद्या अनित्याशुचि-दुःखानात्मसु नित्य-शुचि-सुखात्मख्यातिरिति योगे प्रोक्ता। एवमस्मिताऽपि आत्मानात्मनोरेकता-प्रत्ययः, शरीराद्यतिरिक्त आत्मा नास्तीत्येवंरूपः; अविद्या तु नैवं-रूपा, आत्मनः शरीराशरीरोभयरूपत्वेऽपि शरीरेऽहं-बुद्ध्युपपत्तेः। राग-द्वेषौ तु प्रसिद्धावेव। अभिनिवेशश्च मरणादित्रास इति। रागादीनां विपर्य्ययकार्य्यतया विपर्य्ययत्वम् ॥ ३७ ॥

विपर्य्ययस्य स्वरूपमुक्त्वा तत्कारणस्याशक्तेरपि स्वरूपमाह—

( विपर्य्ययहेतोरशक्तेः भेदाः ।— )

## अशक्तिरष्टाविंशतिधा तु ॥ ३८ ॥

सुगमम् । एतदपि कारिकया व्याख्यातम्—

"एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।
सप्तदश वधा बुद्धेर्विपर्य्ययात् तुष्टिसिद्धीनाम् ॥"(ईश्व० का०४९)इति ।

"बाधिर्य्यं कुष्ठिताऽन्धत्वं जड़ताऽजिघ्रता तथा ।
मूकता कौण्य पङ्गुत्वे क्लैव्योदावर्त्तमुग्धताः ॥"

इत्येकादशेन्द्रियाणामेकादशाशक्तयः, स्वतश्च बुद्धेः सप्तदशाशक्तयः । यथा वक्ष्यमाणानां नवतुष्टीनां विघाता नव, तथा वक्ष्यमाणानामष्टसिद्धीनां च विघाता अष्टाविति मिलित्वा चेमाः स्वतः परतश्चाष्टाविंशतिर्बुद्धेरशक्तय इत्यर्थः । तु-शब्द एषां विशेषप्रसिद्धिख्यापनार्थः ॥ ३८ ॥

ययोर्विघाते बुद्धेरशक्ती, ते तुष्टि-सिद्धी सूत्रद्वयेनाह—

( तुष्टेर्भेदाः ।— )

## तुष्टिर्नवधा ॥ ३९ ॥

स्वयमेव नवधात्वं वक्ष्यति ॥ ३९ ॥

( सिद्धेर्भेदाः ।— )

## सिद्धिरष्टधा ॥ ४० ॥

एतदपि स्वयं वक्ष्यति ॥ ४० ॥

उक्तानां विपर्य्ययाशक्ति-तुष्टि-सिद्धीनां विशेषजिज्ञासायां क्रमेण सूत्रचतुष्टयं प्रवर्त्तते—

( बन्धहेतुविपर्य्ययस्य अवान्तरभेदाः ।— )

## अवान्तरभेदाः पूर्ववत् ॥ ४१ ॥

विपर्य्ययस्यावान्तरभेदा ये सामान्यतः पञ्चोक्ताः, ते पूर्ववत् पूर्वाचार्य्यैर्यथोक्तास्तथैव विशिष्य अवधार्य्याः, विस्तरभयान्नेहोच्यन्ते इत्यर्थः । ते चाविद्यादयो मयाऽपि सामान्यत एव व्याख्याताः पञ्चेति ; विशेषतस्तु द्वाषष्टिभेदाः ; तदुक्तं कारिकायाम्—

"भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।
तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥" ( ईश्व० क्रा० ४८ )

इति । अस्यायमर्थः,—अष्टस्वव्यक्त-महदहङ्कार-पञ्चतन्मात्रेषु प्रकृतिष्वनात्मसु आत्मबुद्धिरविद्या तमोऽष्टधा भवति । कार्य्य-कारणाभेदेन केवलविकृतिष्वात्मबुद्धेरप्यत्रान्तर्भावः । एवमविद्याया विषयभेदेनाष्टविधत्वात् तत्समानविषयकस्यास्मिताख्यमोहस्याष्टविधत्वम् । दिव्यादिव्यभेदेन शब्दादीनां विषयाणां दशत्वात् तद्विषयको रागाख्यो महामोहो दशविधः । अविद्याऽस्मितयोरष्टौ ये विषयाः, ये रागस्य दश विषयाः, तद्विघातकेष्वष्टादशस्वष्टादशधा तामिस्राख्यो द्वेषः । एवं तेषामष्टादशानां विनाशादिदर्शनादष्टादशधा अन्धतामिस्राख्योऽभिनिवेशो भयमिति । एतेषां च तमआदिसंज्ञा तद्धेतुत्वादिति ॥ ४१ ॥

( अशक्तेरवान्तरभेदाः ।— )

## एवमितरस्याः ॥ ४२ ॥

एवं पूर्ववदेवेतरस्या अशक्तेरप्यवान्तरभेदा अष्टाविंशतिर्विशेषतोऽवमन्तव्या इत्यर्थः । अशक्तिरष्टाविंशतिधेत्येतस्मिन्नेव सूत्रेऽष्टाविंशतिधात्वं मया व्याख्यातम् ॥ ४२ ॥

( नवधा-तुष्टेर्विवरणम् ।— )

## आध्यात्मिकादिभेदान्नवधा तुष्टिः ॥ ४३ ॥

इदं सूत्रं कारिकया व्याख्यातं—

"आध्यात्मिक्यश्चतस्रः प्रकृत्युपादान-काल-भाग्याख्याः ।
बाह्या विषयोपरमात् पञ्च नव तुष्टयोऽभिहिताः ॥" (ईश्व० क्रा० ५०)

इति । अस्यायमर्थः,—आत्मानं तुष्टिमतः सङ्घातमधिकृत्य वर्त्तन्ते इत्याध्यात्मिक्यस्तुष्टयश्चतस्रः । तत्र प्रकृत्याख्या तुष्टिर्यथा—साक्षात्कारपर्य्यन्तः परिणामः सर्वोऽपि प्रकृतेरेव ; तं च प्रकृतिरेव करोति, अहं तु कूटस्थः पूर्ण इत्यात्मभावनात् परितोषः । इयं तुष्टिरम्भ इत्युच्यते । ततश्च प्रव्रज्योपादानेन या तुष्टिः सोपादानाऽऽख्या सलिलमित्युच्यते । ततश्च प्रव्रज्यायां बहुकालं समाध्यनुष्ठानेन या तुष्टिः सा कालाख्या तुष्टिरोघ इत्युच्यते । ततश्च प्रज्ञानपरमकाष्ठारूपे धर्ममेघसमाधौ सति या

तुष्टिः, सा भाग्याख्या तुष्टिरित्युच्यते इति चतस्र आध्यात्मिकाः। बाह्याः पञ्च तुष्टयो बाह्यविषयेषु पञ्चसु शब्दादिष्वर्जन रक्षण-क्षय भोग-हिंसादि-दोषनिमित्तोपरमाज्जायन्ते। ताश्च तुष्टयो यथाक्रमं पारं, सुपारं, पारा-पारम्, अनुत्तमाम्भ, उत्तमाम्भ इति परिभाषिता इति। कश्चित् त्विमां कारिकामन्यथा व्याख्यातवान्। तद्यथा—विवेकसाक्षात्कारोऽपि प्रकृति-परिणाम एवेत्यलं ध्यानाभ्यासेनत्येवं-दृष्ट्या या ध्यानादिनिवृत्तौ तुष्टिः, सा प्रकृत्याख्या। प्रव्रज्योपादानेनैव मोक्षो भविष्यति किं ध्याना-दिनेति या तुष्टिः सोपादानाख्या। अनवन्यासस्यापि कालेनैव मोक्षो भविष्यति, अलमुद्वेगेनेति या तुष्टिः, सा कालाख्या। भाग्यादेव मोक्षो भविष्यति, न मोक्षशास्त्रोक्तसाधनैः, एवं कुतर्के या तुष्टिः, सा भाग्या-ख्येत्यादिरर्थ इति। तन्न; तद्व्याख्यात तुष्टीनामभावस्य ज्ञानाद्यनुकूल-त्वेनाशक्तिपरिभाषाऽनौचित्यादिति ॥ ४३ ॥

(अष्टधासिद्धेर्विवरणम्।—)

## ऊहादिभिः सिद्धिः ॥ ४४ ॥

ऊहादिभेदैः सिद्धिरष्टधा भवतीत्यर्थः। इदमपि सूत्रं कारिकया व्याख्यातम्—

"ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः।

दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥" (ईश्व० का० ५१)

इति। अयमर्थः,—अत्राध्यात्मिकादिदुःखत्रयप्रतियोगिकत्वात् त्रयो दुःखविघाता मुख्यसिद्धयः। इतरास्तु तत्साधनत्वात् गौण्यः सिद्धयः। तत्रोहो यथा—उपदेशादिकं विनैव प्राग्भवीयाभ्यासवशात् तत्त्वस्य स्वयमूहनमिति। शब्दस्तु यथा—अन्यदीयपाठमाकर्ण्य स्वयं वा शास्त्रमाकलय्य यत् ज्ञानं जायते तदिति। अध्ययनं च यथा—शिष्या-चार्यभावेन शास्त्राध्ययनात् ज्ञानमिति। सुहृत्प्राप्तिर्यथा—स्वयमुप-देशार्थं गृहमागतात् परमकारुणिकात् ज्ञानलाभ इति। दानं च यथा—धनादिदानेन परितोषितात् ज्ञानलाभ इति। एषु च पूर्वस्त्रिविध ऊह-शब्दाध्ययनरूपो मुख्यसिद्धेरङ्कुश आवर्पकः। सुहृत्प्राप्ति-दानयोरूहादि-त्रयापेक्षया मन्दसाधनत्वप्रतिपादनायेदमुक्तम्। कश्चित् त्वेतासामष्ट-

सिद्धीनामङ्कुशो निवारकः पूर्वोक्तस्त्रिविधो विपर्ययाशक्ति-तुष्टिरूपो भवति, बन्धकत्वादिति व्याचष्टे, तन्न; तुष्ट्यभावस्याशक्तित्वेन बाधिर्य्यादिवत् सिद्धिविरोधितालाभेन तुष्ट्यतुष्ट्योरुभयोः सिद्धिविरोधित्वासम्भवात् ॥४४॥

नन्वूहादिभिरेव कथं सिद्धिरुच्यते, मन्त्र तपः-समाध्यादिभिरप्यणिमाद्यष्टसिद्धेः सर्वशास्त्रसिद्धत्वादिति ? तत्राह—

( ऊहादिभिर्विना सिद्ध्याभासत्वोक्तिः ।— )

## नेतरादितरहानेन विना ॥ ४५ ॥

इतरादूहनादिपञ्चकभिन्नात् तप-आदेस्तात्त्विकी न सिद्धिः। कुतः ? इतरहानेन विना, यतः सा सिद्धिरितरस्य विपर्य्ययस्य हानं विनैव भवति, अतः संसारापरिपन्थित्वात् सा सिद्ध्याभास एव, न तु तात्त्विकी सिद्धिरित्यर्थः। तथा चोक्तं योगसूत्रेण—"ते समाधावुपसर्गा व्युत्थाने सिद्धयः" ( विभू० पा० ३७ ) इति। तदेवं ज्ञानान्मुक्तिरित्यस्य विस्तरतो बुद्धि-गुणरूपः प्रत्ययसर्गः सकार्य्यबन्धो मोक्षोपायरूपार्थेन व्याख्यातः। एतौ च बुद्धि-तद्गुणरूपौ सर्गौ प्रवाहरूपेणान्योऽन्यं हेतू बीजाङ्कुरवत्। तथा च कारिका—

"न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः।

लिङ्गाख्यो भावाख्यस्तस्मात् द्विविधः प्रवर्तते सर्गः॥" (ईश्व० का० ५२)

इति। भावा वासनारूपा बुद्धिज्ञानादिगुणा, लिङ्गं महत्तत्त्वं बुद्धिरिति। समाप्तसर्गः प्रत्ययसर्गश्च समाप्तः ॥ ४५ ॥

साम्प्रतं व्यक्तिभेदः कर्मविशेषादिति सङ्क्षेपादुक्तां व्यष्टिसृष्टिं विस्तरतः प्रतिपादयति—

( व्यष्टिसृष्टिप्रतिपादनम् ।— )

## दैवादिप्रभेदा ॥ ४६ ॥

दैवादिः प्रभेदोऽवान्तरभेदो यस्याः सा तथा, सृष्टिरिति शेषः। तदेतत् कारिकया व्याख्यातम्—

"अष्टविकल्पो दैवस्तैर्य्यग्योनश्च पञ्चधा भवति।

मानुष्यश्चैकविधः समासतो भौतिकः सर्गः॥" (ईश्व० का० ५३)

इति। ब्राह्म प्राजापत्यैन्द्र पैत्र गान्धर्व-याक्ष-राक्षस पैशाचा इत्यष्टविधो

दैवः सर्गः । पशु मृग पक्षि सरीसृप स्थावरा इति तैर्य्यग्योनः पञ्चविधः । मानुष्यसर्गश्चैकप्रकार इति। भौतिको भूताना व्यष्टिप्राणिना विराजः प्रकाशात् सर्ग इत्यर्थः ॥ ४६ ॥

अवान्तरसृष्टेरप्युक्ताया पुरुषार्थत्वमाह—

( अवान्तरसृष्टेरपि पुरुषार्थत्वोक्तिः ।— )

## आ-ब्रह्मस्तम्बपर्य्यन्तं तत्कृते सृष्टिरा-विवेकात् ॥४७॥

चतुर्मुखमारभ्य स्थावरान्ता व्यष्टिसृष्टिरपि विराट्सृष्टिवदेव पुरुषार्था भवति, तत्त पुरुषाणा विवेकख्यातिपर्य्यन्तमित्यर्थः ॥ ४७ ॥

व्यष्टिसृष्टावपि विभागमाह सूत्रत्रयेण—

( सात्त्विकसृष्टेः स्थाननिर्देशः ।— )

## ऊर्द्ध्वं सत्त्वविशाला ॥ ४८ ॥

ऊर्द्ध्व भूर्लोकादुपरि सृष्टिः सत्त्वाधिका भवतीत्यर्थः ॥ ४८ ॥

( तामससृष्टेः स्थाननिर्देशः ।— )

## तमोविशाला मूलतः ॥ ४९ ॥

मूलतो भूर्लोकादध इत्यर्थः ॥ ४९ ॥

( राजससृष्टेः स्थाननिर्देशः ।— )

## मध्ये रजोविशाला ॥ ५० ॥

मध्ये भूर्लोक इत्यर्थः ॥ ५० ॥

नन्वेकस्या एव प्रकृतेः केन निमित्तेन सत्त्वादिविशालतया विचित्राः सृष्टयः ? इत्याकाङ्क्षायामाह—

( सात्त्विकादिसृष्टिवैचित्र्ये कारणनिर्देशः ।— )

## कर्मवैचित्र्यात् प्रधानचेष्टा, गर्भदासवत् ॥५१॥

विचित्रकर्मनिमित्तादेव यथोक्ता प्रधानस्य चेष्टा कार्य्यवैचित्र्यरूपा भवति। वैचित्र्ये दृष्टान्तो गर्भदासवदिति। यथा गर्भावस्थामारभ्य यो दासस्तस्य भृत्यवासनापाटवेन नानाप्रकारा चेष्टा परिचर्य्या स्वाम्यर्थं भवति, तद्वदित्यर्थः ॥ ५१ ॥

ननु चेदूर्द्ध्व सत्त्वविशाला सृष्टिरस्ति, तर्हि तत एव कृतार्थत्वात् पुरुषस्य किं मोक्षेणेति ? तत्राह—

( सात्त्विकसृष्टेरपि हेयत्वनिर्देशः ।— )

## आवृत्तिस्तत्रापि, उत्तरोत्तरयोनियोगाद्धेयः ॥ ५२ ॥

तत्राप्यूर्द्ध्वगतावपि सत्यामावृत्तिरस्ति, अत उत्तरोत्तरयोनियोगादधोऽधोयोनिजन्मनः सोऽपि लोको हेय इत्यर्थः ॥ ५२ ॥

किञ्च—

( सात्त्विकसृष्टेरपि हेयत्वे कारणान्तरनिर्देशः ।— )

## समानं जरा-मरणादिजं दुःखम् ॥ ५३ ॥

ऊर्द्ध्व-गतानां ब्रह्मादि-स्थावरान्तानां सर्वेषामेव जरा-मरणादिजं दुःखं साधारणम्, अतोऽपि हेय इत्यर्थः ॥ ५३ ॥

किं बहुना, कारणे लयादपि न कृतकृत्यतेत्याह—

( कारणलयादपि कृतकृत्यताऽभावोक्तिः ।— )

## न कारणलयात् कृतकृत्यता, मग्नवदुत्थानात् ॥ ५४ ॥

विवेकज्ञानाभावे यदा महदादिषु वैराग्यं प्रकृत्युपासनया भवति, तदा प्रकृतौ लयो भवति, "वैराग्यात् प्रकृतिलयः" इति वचनात्; तस्मात् कारणलयादपि न कृतकृत्यता अस्ति, मग्नवदुत्थानात् । यथा जले मग्नः पुरुषः पुनरुत्तिष्ठति, एवमेव प्रकृतिलीनाः पुरुषाः ईश्वरभावेन पुनराविर्भवन्ति, संस्कारादेरक्षयेण पुनः रागाभिव्यक्तेर्विवेकख्यातिं विना दोषदाहानुपपत्तेरित्यर्थः ॥ ५४ ॥

ननु कारणं केनापि न कार्य्यते, अतः स्वतन्त्रा कथं स्वोपासकस्य दुःखनिदानमुत्थानं पुनः करोति ? तत्राह—

( प्रकृतिलयानामपि पुनरुत्थानम् ।— )

## अकार्य्यत्वेऽपि तद्योगः पारवश्यात् ॥ ५५ ॥

प्रकृतेरकार्य्यत्वेऽप्यप्रेर्य्यत्वेऽप्यन्येच्छाऽनधीनत्वेऽपि तद्योगः पुनरुत्थानौचित्यं तल्लीनस्य; कुतः? पारवश्यात् पुरुषार्थतन्त्रत्वात्, विवेकख्यातिरूपपुरुषार्थवशेन प्रकृत्या पुनरुत्थाप्यते स्वलीन इत्यर्थः । पुरुषार्थादयश्च

प्रकृतेर्न प्रेरका., किन्तु प्रवृत्तिस्वभावायाः प्रवृत्तौ निमित्तानीति न स्वातन्त्र्यक्षतिः। तथा च योगसूत्रं—"निमित्तमप्रयोजकं प्रकृतीनां, वरणभेदस्तु ततः क्षेत्रिकवत्" (कैव० पा० ३) इति। वरणभेदः प्रतिबन्धनिवृत्तिः ॥ ५५ ॥

प्रकृतिलयात् पुरुषस्योत्थाने प्रमाणमप्याह—

( प्रकृतिलयात् पुरुषस्य पुनरुत्थाने प्रमाणम्।— )

## स हि सर्ववित् सर्वकर्त्ता ॥ ५६ ॥

स हि पूर्वसर्गे कारणलीनः सर्गान्तरे सर्ववित् सर्वकर्त्तेश्वर आदिपुरुषो भवति, प्रकृतिलये तस्यैव प्रकृतिपदप्राप्त्यौचित्यात्। "तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषिक्तमस्य" (बृह० उ० ४।४।६) इत्यादिश्रुतेरित्यर्थः ॥ ५६ ॥

नन्वेवमीश्वरप्रतिषेधानुपपत्तिः? तत्राह—

( जन्येश्वरसिद्धिः।— )

## ईदृशेश्वरसिद्धिः सिद्धा ॥ ५७ ॥

प्रकृतिलीनस्य जन्येश्वरस्य सिद्धिः "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः" (मुण्ड० १।१।९) इत्यादिश्रुतिभ्यः सर्वसम्मतैव, नित्येश्वरस्यैव विवादास्पदत्वादित्यर्थः। सूत्रद्वयमिदं व्याख्याय पारवश्यमपि प्रतिपादयति, स हीति सूत्रेण। स हि परः पुरुषसामान्यं सर्वज्ञानशक्तिमत् सर्वकर्तृताशक्तिमच्च, अयस्कान्तवत् सन्निधिमात्रेण प्रेरकत्वादित्यर्थः। तदा चास्मात्प्रार्थपुरुषसान्निध्यात् तदर्थमन्येच्छाऽनधीनाया अपि प्रकृतेः प्रवृत्तिरावश्यकीति। नन्वेवमीश्वरप्रतिषेधविरोध? तत्राह—ईदृशेश्वरसिद्धिः सिद्धा सान्निध्यमात्रेणेश्वरस्य सिद्धिस्तु श्रुति-स्मृतिषु सर्वसम्मतेत्यर्थः।

"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति।
ईशानो भूतभव्यस्य न ततो विभुरश्नुते॥" (कठ० ४।१२)
"सृजते च गुणान् सर्वान् क्षेत्रज्ञस्त्वनुपश्यति।
गुणान् विक्रियते सर्वानुदासीनवदीश्वरः॥"

इत्यादिश्रुति-स्मृतयश्चैतादृशेश्वरे प्रमाणमिति ॥ ५७ ॥

द्वितीयाध्यायादिमारभ्यैतावत्पर्य्यन्तं सूत्रव्यूहैः प्रधानसृष्टिः समाप्तिता ; इतः परं मोक्षोपपत्त्यर्थं प्रधानसृष्टेर्ज्ञानिपुरुषं प्रति अत्यन्तनिवृत्तिरध्यास्त-त्याख्या वक्तव्या ; तदुपपत्त्यर्थमादौ प्रधानसृष्टेः प्रयोजनं द्वितीयाध्याय-स्यादिसूत्रे दिङ्मात्रेणोक्तं विस्तरतः प्रतिपादयति—

( विस्तारेण प्रधानसृष्टेः प्रयोजनप्रतिपादनम् ।— )

## प्रधानसृष्टिः परार्थं स्वतोऽपि, अभोक्तृत्वादुष्ट्र-कुङ्कुमवहनवत् ॥ ५८ ॥

प्रधानस्य स्वत एव सृष्टिर्यद्यपि, तथाऽपि परार्थमन्यस्य भोगापवर्गार्थम् ; यथा उष्ट्रस्य कुङ्कुमवहनं स्वाम्यर्थम् । कुतः ? अभोक्तृत्वादचेतनत्वेन भोगापवर्गासम्भवादित्यर्थः । ननु "विमुक्तमोक्षार्थं स्वार्थं वा—" (२ १) इत्यनेन स्वार्थाऽपि सृष्टिरुक्तेति चेत् ? सत्यम् ; तथाऽपि पुरुषार्थतां विना स्वार्थताऽपि न सिध्यति । स्वार्थो हि प्रधानस्य कृतभोगापवर्गात् पुरुषा-दात्मविमोक्षणमिति । ननु भृत्यतुल्या चेत् प्रकृतिः, तर्हि कथं स्वामिनो दुःखार्थमपि प्रवर्त्तते इति चेत् ? न ; सुखार्थप्रवृत्त्यैव नान्तरीयकदुःख-सम्भवात् दुष्टभृत्यतुल्यत्वाद्वेति ॥ ५८ ॥

ननु प्रधानस्याचेतनस्य स्वतः स्रष्टृत्वमेव नोपपद्यते, रथादेः परप्रयत्नेनैव प्रवृत्तिदर्शनादिति ? तत्राह—

( अचेतनस्यापि प्रधानस्य स्रष्टृत्वोपपादनम् ।— )

## अचेतनत्वेऽपि क्षीरवच्चेष्टितं प्रधानस्य ॥ ५९ ॥

यथा क्षीरं पुरुषप्रयत्ननेरपेक्ष्येण स्वयमेव दधिरूपेण परिणमते, एवमचेतनत्वेऽपि परप्रयत्नं विनाऽपि महदादिरूपपरिणामः प्रधानस्य भवतीत्यर्थः । "धेनुवद्वत्साय" (२।३७) इत्यनेन सूत्रेणास्य न पौनरुक्त्यं, तत्र करणप्रवृत्तेरेव विचारितत्वात् धेनूनां चेतनत्वाच्चेति ॥ ५९ ॥

दृष्टान्तान्तरप्रदर्शनपूर्वकमुक्तार्थे हेतुमाह—

( प्रधानस्य स्रष्टृत्वप्रतिपादने हेतुप्रदर्शनम् ।— )

## कर्मवत् दृष्टेर्वा कालादेः ॥ ६० ॥

कालादेः कर्मवद्वा स्वतः प्रधानस्य चेष्टितं सिध्यति, दृष्टत्वात् । अर्थक्री

गच्छति ऋतुरिव च प्रवर्त्तते इत्यादिरूपं कालादिकर्म स्वत एव भवति, एवं प्रधानस्यापि चेष्टा स्यात्, कल्पनाया दृष्टानुसारित्वादित्यर्थः ॥ ६० ॥

ननु तथाऽपि ममेदं भोगादिसाधनमिति प्रतिसन्धानाभावाज्जडायाः प्रकृतेः कदाचित् प्रवृत्तिरपि न स्यात्, विपरीता च प्रवृत्तिः स्यात्? तत्राह—

( प्रधानस्य स्रष्टृत्वप्रतिपादने हेत्वन्तरप्रदर्शनम् ।— )

## स्वभावाच्चेष्टितमनभिसन्धानात्, भृत्यवत् ॥ ६१ ॥

यथा प्रकृष्टभृत्यस्य स्वभावात् संस्कारादेव प्रतिनियता आवश्यकी च स्वामिसेवा प्रवर्त्तते, न तु स्वभोगाभिप्रायेण, तथैव प्रकृतिचेष्टितं संस्कारादेवेत्यर्थः ॥ ६१ ॥

( प्रधानस्य स्रष्टृत्वप्रतिपादने हेत्वन्तरप्रदर्शनम् ।— )

## कर्माकृष्टेर्वा अनादितः ॥ ६२ ॥

वा-शब्दोऽत्र समुच्चये। यतः कर्मानादि, अतः कर्मभिराकर्षणादपि प्रधानस्यावश्यकी व्यवस्थिता च प्रवृत्तिरित्यर्थः ॥ ६२ ॥

तदेवं प्रधानस्य परार्थतः स्रष्टृत्वे सिद्धे परप्रयोजनसमाप्तौ स्वत एव प्रधाननिवृत्त्या मोक्षः सिध्यतीत्याह प्रघट्टकेन—

( प्रधानस्य सृष्टिनिवृत्तौ हेतुप्रदर्शनम् ।— )

## विविक्तबोधात् सृष्टिनिवृत्तिः प्रधानस्य, सूदवत् पाके ॥ ६३ ॥

विविक्तपुरुषज्ञानात् परवैराग्येण पुरुषार्थसमाप्तौ प्रधानस्य सृष्टिर्निवर्त्तते; यथा पाके निष्पन्ने पाचकस्य व्यापारो निवर्त्तते इत्यर्थः। इयमेवात्यन्तिकप्रलय इत्युच्यते। तथा च श्रुतिः,—"तस्याभिध्यानात् योजनात् तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः" ( श्वेताश्व० १।१० ) इति ॥ ६३ ॥

नन्वेवमेकपुरुषस्योपाधौ विवेकज्ञानोत्पत्त्या प्रकृतेः सृष्टिनिवृत्तौ सर्वमुक्तिप्रसङ्ग इति? तत्राह—

( प्रधानस्य सृष्टिनिवृत्तौ सर्वमुक्तिप्रसङ्गखण्डनम् ।— )

## इतर इतरवत्, तद्दोषात् ॥ ६४ ॥

इतरस्तु विविक्तबोधरहित इतरवत् बद्धवदेव प्रकृत्या तिष्ठति। कुतः? तद्दोषात् तस्य प्रधानस्यैव तत्पुरुषार्थासमापनाख्यदोषादित्यर्थः। तदुक्तं योगसूत्रे—"कृतार्थं प्रति नष्टमप्यनष्टं, तदन्यसाधारणत्वात्" ( साध० पा० २२ ) इति। तथा च, पूर्वसूत्रे या प्रधाननिवृत्तिरुक्ता, सा विविक्तबोधपुरुषं प्रत्येवेति भावः। विश्वमायाश्रुतिरपि ज्ञानिनं प्रत्येव मन्तव्या, "अजाम्" (श्वेताश्व० ४।५) इति श्रुत्यैकवाक्यत्वादिति ॥ ६४ ॥

सृष्टिनिवृत्तेः फलमाह—

( प्रधानस्य सृष्टिनिवृत्तेः फलम् ।— )

## द्वयोरेकतरस्य वौदासीन्यमपवर्गः ॥ ६५ ॥

द्वयोः प्रधान-पुरुषयोरेवौदासीन्यमेकाकिता, परस्परवियोग इति यावत्; सोऽपवर्गः। अथवा पुरुषस्यैव कैवल्यम्, अहं मुक्तः स्यामित्येव पुरुषार्थतादर्शनादित्यर्थः ॥ ६५ ॥

ननु एकपुरुषमुक्तावेव विवेकाकारवृत्त्या विरक्ता प्रकृतिः कथमन्यपुरुषाय पुनः सृष्टौ प्रवर्त्तताम्? न च प्रकृतेरंशभेदान्नैष दोष इति वाच्यम्; मुक्तपुरुषोपकरणयोरपि पृथिव्यादिभिरन्यस्य भोग्यसृष्टिदर्शनादिति? तत्राह—

( प्रधानस्य पुरुषान्तरं प्रति पुनः सृष्टिप्रवृत्तिकथनम् ।— )

## अन्यसृष्ट्युपरागेऽपि न विरज्यते, प्रबुद्धरज्जुतत्त्वस्यैवोरगः ॥ ६६ ॥

एकस्मिन् पुरुषे विविक्तबोधाद्विरक्तमपि प्रधानं नान्यस्मिन् पुरुषे सृष्ट्युपरागाय विरक्तं भवति, किन्तु तं प्रति सृजत्येव; यथा प्रबुद्धरज्जुतत्त्वस्यैवोरगो भयादिकं न जनयति, मूढं प्रति तु जनयत्येवेत्यर्थः। उरगतुल्यत्वं च प्रधानस्य रज्जुतुल्ये पुरुषे समारोपणादिति। एवंविधं रज्जु-सर्पादिदृष्टान्तानामाशयमबुद्ध्वैवाबुधाः केचिद्वेदान्तिब्रुवाः प्रकृतेरत्यन्त-

तुच्छत्वं मनोमात्रत्वं वा तुलयन्ति । एतेन प्रकृतिसत्यत्वादिसाङ्ख्योक्त-दृष्टान्तेन श्रुतिस्मृत्यर्थो बोधनीयाः, न केवलं दृष्टान्तवत्तेनायमर्थः सिध्यति ॥ ६६ ॥

( प्रधानस्य पुरुषान्तरं प्रति पुनः सृष्टिप्रवृत्तौ हेतुप्रदर्शनम् ।— )

## कर्मनिमित्तयोगाच्च ॥ ६७ ॥

सृष्टौ निमित्तं यत् कर्म तस्य सम्बन्धादप्यन्यपुरुषार्थं सृजतीत्यर्थः ॥ ६७ ॥

ननु सर्वेषां पुरुषाणामप्रार्थकतया नैरपेक्ष्याविशेषेऽपि कश्चित् प्रत्येव प्रधानं प्रवर्त्तते कश्चित् प्रति निवर्त्तत इत्यत्र किं नियामकम् ? न च कर्म नियामकं, कस्य पुरुषस्य किं कर्मेत्यत्र नियामकाभावादिति ? तत्राह—

( प्रधानस्य पुरुषान्तरं प्रति पुनः सृष्टिप्रवृत्तौ हेत्वन्तरप्रदर्शनम् ।— )

## नैरपेक्ष्येऽपि प्रकृत्युपकारेऽविवेको निमित्तम् ॥ ६८ ॥

पुरुषाणां नैरपेक्ष्येऽप्ययं मे स्वाम्ययमेवाहमित्यविवेकादेव प्रकृतिः सृष्ट्यादिभिः पुरुषानुपकरोतीत्यर्थः, तथा च, यस्मै पुरुषायात्मान-मविविच्य दर्शयितुं वासना वर्त्तते, तं प्रत्येव प्रधानं प्रवर्त्तते इत्येव नियामकमिति भावः ॥ ६८ ॥

प्रवृत्तिस्वभावत्वात् कथं विवेकेऽपि निवृत्तिरुपपद्यताम् ? तत्राह—

( प्रधानस्य सृष्टिनिवृत्तौ हेतुप्रदर्शनम् ।— )

## नर्त्तकीवत् प्रवृत्तस्यापि निवृत्तिः, चारितार्थ्यात् ॥ ६९ ॥

पुरुषार्थमेव प्रधानस्य प्रवृत्तिस्वभावः, न तु सामान्येन ; अतः प्रवृत्तस्यापि प्रधानस्य पुरुषार्थसमाप्तिरूपचरितार्थत्वे सति निवृत्तिर्युक्ता ; यथा परिषद्भ्यो नृत्यदर्शनार्थं प्रवृत्ताया नर्त्तक्यास्तत्सिद्धौ निवृत्ति-रित्यर्थः ॥ ६९ ॥

निवृत्तौ हेत्वन्तरमाह—

( प्रधानस्य सृष्टिनिवृत्तौ दृष्टान्तप्रदर्शनम् ।— )

## दोषबोधेऽपि नोपसर्पणं प्रधानस्य, कुलवधूवत् ॥ ७० ॥

पुरुषेण परिणामित्व-दुःखात्मकत्वादिदोषदर्शनादपि लज्जितायाः प्रकृतेः पुनर्न पुरुषं प्रत्युपसर्पणं, कुलवधूवत् ; यथा स्वामिना मे दोषो दृष्ट इत्यवधारणेन लज्जिता कुलवधूर्न स्वामिनमुपसर्पति, तद्वदित्यर्थः । तदुक्तं नारदीये—

"सविकाराऽपि मौढ्येन चिरं भुक्ता गुणात्मना ।
प्रकृतिर्ज्ञातदोषेयं लज्जयेव निवर्त्तते ॥"

इति । एतदेवोक्तं कारिकयाऽपि—

"प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।
या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥" (ईश्व० का० ६१)

इति ॥ ७० ॥

ननु पुरुषार्थं चेत् प्रधानप्रवृत्तिः, तर्हि बन्ध-मोक्षाभ्यां पुरुषस्य परिणामापत्तिरिति ? तत्राह—

( अविवेकादेव पुरुषस्य बन्ध-मोक्षोक्तिः ।— )

## नैकान्ततो बन्ध-मोक्षौ पुरुषस्याविवेकादृते ॥ ७१ ॥

दुःखयोग वियोगरूपौ बन्ध-मोक्षौ पुरुषस्य नैकान्ततस्तत्त्वतः, किन्तु चतुर्थसूत्रवक्ष्यमाणप्रकारेणाविवेकादेवेत्यर्थः ॥ ७१ ॥

परमार्थतस्तु यथोक्तौ बन्ध-मोक्षौ प्रकृतेरेवेत्याह—

( प्रकृतेरेव बन्ध-मोक्षोक्तिः ।— )

## प्रकृतेराञ्जस्यात् ससङ्गत्वात् पशुवत् ॥ ७२ ॥

प्रकृतेरेव तत्त्वतो दुःखेन बन्ध-मोक्षौ, ससङ्गत्वात् दुःखसाधनैर्धर्मादिभिर्लिप्तत्वात् ; यथा पशुः रज्ज्वा लिप्ततया बन्ध-मोक्षभागी, तद्वदित्यर्थः । एतदुक्तं कारिकया—

"तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति पुरुषः ।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥" (ईश्व० का० ६२)

इति । "द्वयोरेकतरस्य वौदासीन्यमपवर्गः" (३।६५) इति सूत्रे च यः पुरुषस्यापवर्ग उक्तः, स प्रतिबिम्बरूपस्य मिथ्यादुःखस्य वियोग एवेति ॥ ७२ ॥

तत्र कैः साधनैर्बन्धः ? कैर्वा मोक्षः ? इत्याकाङ्क्षायामाह—

( प्रकृतेः बन्ध-मोक्षयोः साधननिर्देशः ।— )

## रूपैः सप्तभिरात्मानं बध्नाति प्रधानं कोशकारवत्, विमोचयत्येकरूपेण ॥ ७३ ॥

धर्म-वैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यैः सप्तभी रूपधर्मैर्दुःखहेतुभिः प्रकृतिरात्मानं दुःखेन बध्नाति, कोशकारवत्; कोशकारकृतिर्यथा स्वनिर्मितेनावासेनात्मानं बध्नाति, तद्वत् । सैव च प्रकृतिरेकरूपेण ज्ञानेनैवात्मानं दुःखान्मोचयतीत्यर्थः ॥ ७३ ॥

ननु बन्ध मुक्ती अविवेकादिति यदुक्तं तदयुक्तम्; अविवेकस्याहेयानुपादेयत्वात्, लोके दुःखस्य तदभावसुखादेरेव च स्वतो हेयोपादेयत्वात्; अन्यथा दृष्टहानिः ? इत्याशङ्का चतुर्दशसूत्रोक्तं रूपं विवृणोति—

( पुरुषस्य बन्ध-मोक्षत्वे अविवेकस्य निमित्तत्वोक्तिसमर्थनम् ।— )

## निमित्तत्वमविवेकस्य न दृष्टहानिः ॥ ७४ ॥

अविवेकस्य पुरुषेषु बन्ध-मोक्षनिमित्तत्वमेव पुरोक्तं, न त्वविवेक एव तावेविति, नातो दृष्टहानिरित्यर्थः । एतच्च प्रथमाध्यायसूत्रेषु स्पष्टम् । अविवेकनिमित्तात् प्रकृति-पुरुषयोः संयोगः, तस्माच्च संयोगादुत्पद्यमानस्य प्राकृतदुःखस्य पुरुषे यः प्रतिबिम्बः, स एव दुःखभोगो दुःखसम्बन्धः, तन्निवृत्तिरेव च मोक्षाख्यः पुरुषार्थ इति ॥ ७४ ॥

तदेवमादिसर्गमारभ्याध्यात्मिकप्रपञ्चैस्तोऽखिलपरिणामः प्रधानतद्विकारयोरिव; 'एतस्य सूत्रस्य पूर्णनिगालम्' एदेत्यध्यायद्वयेन पिण्डतो विवेचितं, तस्य विवेकस्य निष्पत्त्युपायेषु सारभूतमभ्यासमाह—

(तत्त्वाभ्यासात् विवेकसिद्धिकथनम्।—)

## तत्त्वाभ्यासान्नेति नेतीति त्यागाद्विवेक-सिद्धिः ॥ ७५ ॥

प्रकृतिपर्य्यन्तेषु जड़ेषु नेति नेतीत्यभिमानत्यागरूपात्, तत्त्वाभ्यासात् विवेकनिष्पत्तिर्भवति, इतरत् सर्वमस्याभ्यासस्याङ्गमात्रमित्यर्थः। तथा च श्रुतिः,—"अथात आदेशो नेति नेति, न ह्येतस्मादिति,नेत्यन्यत् परमस्ति" (वृह० उ० २।३।६) "स एष आत्मा नेति नेति" (वृह० उ० ३।९।२६) इत्यादिरिति।

"अव्यक्ताद्यविशेषान्ते विकारेऽस्मिंश्च वर्णिते।
चेतनाचेतनान्यत्व ज्ञानेन ज्ञानमुच्यते॥"

इति।—यथा—

"अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम्।
चर्मावनद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः॥
जराशोकसमाविष्टं रोगायतनमातुरम्।
रजस्वलमनित्यञ्च भूतावासमिमं त्यजेत्॥
नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा।
तथा त्यजन्निमं देहं कृच्छ्राद् ग्राहाद्विमुच्यते॥"

इति। एतदेव कारिकयाऽप्युक्तम्—

"एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम्।
अविपर्य्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्॥" (ईश्व० का० ६४)

इति। नास्मीत्यात्मनः कर्तृत्वनिषेधः। न मे इति सङ्गनिषेधः। नाहमिति तादात्म्यनिषेधः। केवलमित्यस्य विवरणम्—अविपर्य्ययाद्विशुद्धमिति, अतोऽन्तरा विपर्य्ययेणाविप्लुतमित्यर्थः। इदमेव कैवलत्वं सिद्धिशब्देन सूत्रे प्रोक्तम्। "विवेकख्यातिरविप्लवा हानोपायः" (साध०पा० २६) इति योगसूत्रेणैतादृशज्ञानस्यैव मोक्षहेतुत्वसिद्धिरिति॥ ७५॥

विवेकसिद्धौ विशेषमाह—

( विवेकसिद्धौ नियमाभावोक्तिः।— )

## अधिकारिप्रभेदान्न नियमः ॥ ७६ ॥

मन्दाद्यधिकारिभेदसत्त्वादभ्यासे क्रियमाणेऽप्यस्मिन्नेव जन्मनि विवेकनिष्पत्तिर्भवतीति नियमो नास्तीत्यर्थः; अत उत्तमाधिकारमभ्यासपाटवेनात्मनः सम्पादयेदिति भावः ॥ ७६ ॥

विवेकनिष्पत्त्यैव निस्तारः, नान्यथेत्याह—

( मध्यविवेकस्यापि उपभोगोक्तिः।— )

## बाधितानुवृत्त्या मध्यविवेकतोऽप्युपभोगः ॥ ७७ ॥

सकृत् सम्प्रज्ञातयोगेनात्मसाक्षात्कारोत्तरं मध्यविवेकावस्थो मध्यमविवेकेऽपि सति पुरुषे बाधितानामपि दुःखादीनां प्रारब्धवशात् प्रतिबिम्बरूपेण पुरुषेऽनुवृत्त्या भोगो भवतीत्यर्थः। विवेकनिष्पत्तिश्चापुनरुत्थानादसम्प्रज्ञातादेव भवतीत्यतस्तस्यां सत्यां न भोगोऽस्तीति प्रतिपादयितुं मध्यविवेकत इत्युक्तम्। मन्दविवेकस्तु साक्षात्कारात् पूर्वं श्रवण-मनन-ध्यानमात्ररूप इति विभागः ॥ ७७ ॥

( जीवन्मुक्तस्य मध्यविवेकावस्थत्वोक्तिः।— )

## जीवन्मुक्तश्च ॥ ७८ ॥

जीवन्मुक्तोऽपि मध्यविवेकावस्थ एव भवतीत्यर्थः ॥ ७८ ॥

जीवन्मुक्ते प्रमाणमाह—

( जीवन्मुक्तस्य प्रमाणम्।— )

## उपदेश्योपदेष्टृत्वात् तत्सिद्धिः ॥ ७९ ॥

शास्त्रेषु विवेकविषये गुरु-शिष्यभावश्रवणाज्जीवन्मुक्तसिद्धिरित्यर्थः, जीवन्मुक्तस्यैवोपदेष्टृत्वसम्भवादिति ॥ ७९ ॥

( जीवन्मुक्तत्वे श्रुतिवाक्यप्रमाणम्।— )

## श्रुतिश्च ॥ ८० ॥

श्रुतिश्च जीवन्मुक्तेऽस्ति—

"दीक्षयैव नरो मुच्येत् तिष्ठेन्मुक्तोऽपि विग्रहे।
कुलालचक्रमध्यस्थो विच्छिन्नोऽपि भ्रमेद्घटः॥"

"ब्रह्मैव सन् ब्रह्माप्येति" (बृह० उ० ४।४।६) इत्यादिरिति। नारदीयस्मृतिरपि—

"पूर्वाभ्यासबलात् कार्य्यं न लोको न च वैदिकः।
अपुण्यपापः सर्वात्मा जीवन्मुक्तः स उच्यते॥"

इति॥ ८०॥

ननु श्रवणमात्रेणाप्युपदेष्टृत्वं स्यात्? तत्राह—

(विवेकाभावात् उपदेष्टृत्वे दोषनिर्देशः।—)

## इतरथा अन्धपरम्परा॥ ८१॥

इतरथा मन्दविवेकस्याप्युपदेष्टृत्वेऽन्धपरम्परापत्तिरित्यर्थः। सामग्र्यात्मतत्त्वमज्ञात्वा चेदुपदिशेत्, कस्मिंश्चिदंशे स्वभ्रमेण शिष्यमपि भ्रान्तं कुर्य्यात्, सोऽप्यन्यं, सोऽप्यन्यमित्येवमन्धपरम्परेति॥ ८१॥

ननु ज्ञानेन कर्मक्षये सति कथं जीवनं स्यात्? तत्राह—

(जीवन्मुक्तस्य सशरीरावस्थाने युक्तिप्रदर्शनम्।—)

## चक्रभ्रमणवत् धृतशरीरः॥ ८२॥

कुलालकर्मनिवृत्तावपि पूर्वकर्मवेगात् स्वयमेव कियत्कालं चक्रं भ्रमति, एवं ज्ञानोत्तरं कर्मानुत्पत्तावपि प्रारब्धकर्मवेगेन चेष्टमानं शरीरं धृत्वा जीवन्मुक्तस्तिष्ठतीत्यर्थः॥ ८२॥

ननु ज्ञानहेतुसम्प्रज्ञातयोगेन भोगादिवासनाक्षये कथं शरीरधारणम्? न च योगस्य संस्काराभिभावकत्वे किं मानमिति वाच्यम्; "व्युत्थान-निरोधसंस्कारयोरभिभव-प्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः" (विभू० पा० ९) इति योगसूत्रतस्तत्सिद्धेः, चिरकालीनस्य विषयान्तरावेशस्य विषयान्तरसंस्काराभिभावकतया लोकेऽप्यनुभवाच्चेति? तत्राह—

( शरीरधारणे संस्कारलेशस्यापि उपयोगिता ।— )

## संस्कारलेशतस्तत्सिद्धिः ॥ ८३ ॥

शरीरधारणहेतवो ये विषयसंस्काराः, तेषामल्पावशेषात् तस्य शरीरधारणस्य सिद्धिरित्यर्थः। अत्र चाविद्यासंस्कारलेशस्य सत्ता नापेक्ष्यते, अविद्याया जन्मादिरूपकर्मविपाकारम्भमात्रे हेतुत्वात्, योगभाष्ये व्यासैस्तथा व्याख्यातत्वात्, वीतरागजन्मादर्शनादिति न्यायाच्च; न तु प्रारब्धफलककर्मभोगेऽपीति। यत्र च नियमेनाविद्या अपेक्ष्यते, स प्रयासविशेषरूपो भोगो मूढेष्वेवास्ति, जीवन्मुक्तानां तु भोगाभास एवेति प्रागुक्तम्। यत् तु कश्चिदविद्यासंस्कारलेशोऽपि जीवन्मुक्तस्य तिष्ठतीत्याह, तन्न; धर्माधर्मोत्पत्तिप्रसङ्गात्, अन्धपरम्पराप्रसङ्गात्, अविद्यासंस्कारलेशसत्ताकल्पने प्रयोजनाभावाच्च; एतच्च ब्रह्ममीमांसाभाष्ये प्रपञ्चितमिति ॥ ८३ ॥

शास्त्रवाक्यार्थमुपसंहरति—

( विवेकात् कृतकृत्यताप्रदर्शनम् ।— )

## विवेकान्निःशेषदुःखनिवृत्तौ कृतकृत्यता, नेतरान्नेतरात् ॥ ८४ ॥

उक्ताया विवेकसिद्धितः परवैराग्यद्वारा सर्ववृत्तिनिरोधेन यदा निःशेषतो बाधिताबाधितसाधारण्येनाखिलदुःखं निवर्त्तते, तदैव पुरुषः कृतकृत्यो भवति, नेतराज्जीवन्मुक्त्यादेरपीत्यर्थः। नेतरादिति वीप्साऽध्यायसमाप्तौ ॥ ८४ ॥

अत्यन्तलयपर्य्यन्तः कार्य्योऽव्यक्तस्य नात्मनः।
प्रोक्त एवं विवेकोऽत्र परवैराग्यसाधनम् ॥

इति श्रीविज्ञानभिक्षुनिर्मिते कापिलसाङ्ख्यप्रवचनस्य
भाष्ये वैराग्याध्यायस्तृतीयः ॥ ३ ॥

# चतुर्थोऽध्यायः ।

शास्त्रसिद्धाख्यायिकाजातमुखेनेदानीं विवेकज्ञानसाधनानि प्रदर्शनी-
यानीत्येतदर्थं चतुर्थाध्याय आरभ्यते—

( तत्त्वोपदेशात् विवेकोत्पत्तौ राजपुत्रदृष्टान्तः ।— )

## राजपुत्रवत् तत्त्वोपदेशात् ॥ १ ॥

पूर्वपादशेषसूत्रस्थविवेकोऽनुवर्त्तते । राजपुत्रस्येव तत्त्वोपदेशाद्विवेको जायते इत्यर्थः । अत्रेयमाख्यायिका—कश्चिद्राजपुत्रो गण्डर्जंजन्मना पुरान्निःसारितः शबरेण केनचित् पोषितोऽहं शबर इत्यभिमन्यमान आस्ते । तं जीवन्तं ज्ञात्वा कश्चिदमात्यः प्रबोधयति, न त्वं शबरः, राजपुत्रोऽसीति । स यथा झटित्येव चाण्डालाभिमानं त्यक्त्वा तात्त्विकं राजभावमेवालम्बते, राजाऽहमस्मीति, एवमेवादिपुरुषात् परिपूर्ण-चिन्मात्रेणाभिव्यक्तादुत्पन्नस्त्वं तस्यांश इति कारुणिकोपदेशात् प्रकृत्यभि-मानं त्यक्त्वा ब्रह्मपुत्रत्वादहमपि ब्रह्मैव, न तु तद्विलक्षणः संसारीत्येवं स्व-स्वरूपमेवालम्बते इत्यर्थः । तथा गारुडे—

"यथैकहेममणिना सर्वं हेममयं जगत् ।
तथैव जातमीशेन जातेनाप्यखिलं भवेत् ॥
ग्रहाविष्टो द्विजः कश्चिच्छूद्रोऽहमिति मन्यते ।
ग्रहनाशात् पुनः स्वीयं ब्राह्मण्यं मन्यते यथा ॥
मायाविष्टस्तथा जीवो देहोऽहमिति मन्यते ।
मायानाशात् पुनः स्वीयं रूपं ब्रह्मास्मि मन्यते ॥"

इति ॥ १ ॥

स्त्री-शूद्रादयोऽपि ब्राह्मणेन ब्राह्मणस्योपदेशं श्रुत्वा कृतार्थाः स्युरित्ये-तदर्थमाख्यायिकाऽन्तरं दर्शयति—

( अन्यार्थोपदेशात् विवेके पिशाचस्याख्यायिका ।— )

## पिशाचवदन्यार्थोपदेशेऽपि ॥ २ ॥

अर्जुनार्थं श्रीकृष्णेन तत्त्वोपदेशे क्रियमाणेऽपि समीपस्थस्य पिशाचस्य विवेकज्ञानं जातम्, एवमन्येषामपि भवेदित्यर्थः ॥ २ ॥

यदि च सकृदुपदेशात् ज्ञानं न जायते, तदोपदेशावृत्तिरपि कर्त्तव्या इतीतिहासान्तरेणाह—

( पुनः पुनः उपदेशस्य कर्त्तव्यतायां श्वेतकेतोराख्यायिका ।— )

## आवृत्तिरसकृदुपदेशात् ॥ ३ ॥

उपदेशावृत्तिरपि कर्त्तव्या, छान्दोग्यादौ श्वेतकेत्वादिकं प्रत्यारुणि-प्रभृतीनामसकृदुपदेशेतिहासादित्यर्थः ॥ ३ ॥

वैराग्यार्थं निदर्शनपूर्वकमात्मसङ्घातस्य भङ्गुरत्वादिकं प्रतिपादयति—

( वैराग्यात् विवेकोत्पत्तौ पिता-पुत्रयोः दृष्टान्तः ।— )

## पिता-पुत्रवदुभयोर्दृष्टत्वात् ॥ ४ ॥

स्वस्य पिता-पुत्रयोरिवात्मनोऽपि मरणोत्पत्त्योर्दृष्टत्वादनुमितत्वात् वैराग्येण विवेको भवतीत्यर्थः । तदुक्तम्—

"आत्मनः पितृ पुत्राभ्यामनुमेयौ भवाप्ययौ" ।

इति ॥ ४ ॥

इतः परमुत्पन्नज्ञानस्य विरक्तस्य च ज्ञाननिष्पत्त्यङ्गान्याख्यायिकोक्त-दृष्टान्तैर्दर्शयति—

( त्याग-वियोगयोः सुख-दुःखत्वे श्येनस्याख्यायिका ।— )

## श्येनवत् सुख-दुःखी त्याग-वियोगाभ्याम् ॥५॥

परिग्रहो न कर्त्तव्यः, यतो द्रव्याणां त्यागेन लोकः सुखी, वियोगेन च दुःखी भवति श्येनवदित्यर्थः । श्येनो हि सामिषः केनाप्यपहृत्यामिषा-द्वियोज्य दुःखीक्रियते, स्वयं चेत् त्यजति, तदा दुःखाद्विमुच्यते । तदुक्तं—

"सामिषं कुररं जघ्नुर्बलिनोऽन्ये निरामिषाः ।
तदामिषं परित्यज्य स सुखं समविन्दत ॥"

इति । तथा मनुनाऽप्युक्तं—

"नदीकूलं यथा वृक्षो वृक्षं वा शकुनिर्यथा ।
तथा त्यजन्निमं देहं कृच्छ्रात् ग्राहाद्विमुच्यते ॥"

इति ॥ ५ ॥

( हेयबुद्ध्या त्यागे सर्पकञ्चुकदृष्टान्तः ।— )

## अहिनिर्ल्वयिनीवत् ॥ ६ ॥

यथा अहिर्जीर्णां त्वचं परित्यजत्यनायासेन हेयबुद्ध्या, तथैव मुमुक्षुः प्रकृतिं बहुकालोपभुक्तां जीर्णां हेयबुद्ध्या त्यजेदित्यर्थः । तदुक्तं—

"जीर्णां त्वचमिवोरगः"

इति ॥ ६ ॥

त्यक्तं च प्रकृत्यादिकं पुनर्न स्वीकुर्य्यादित्याह—

( त्यक्तायाः प्रकृतेः पुनरग्रहणे छिन्नहस्तदृष्टान्तः ।— )

## छिन्नहस्तवद्वा ॥ ७ ॥

यथा छिन्नं हस्तं पुनः कोऽपि नादत्ते, तथैवैतत् त्यक्तं पुनर्नाभिमन्येतेत्यर्थः । वा-शब्दोऽप्यर्थे ॥ ७ ॥

( अनुपयोगिचिन्ताया बन्धनहेतुत्वे भरतदृष्टान्तः ।— )

## असाधनानुचिन्तनं बन्धाय भरतवत् ॥ ८ ॥

विवेकस्य यदन्तरङ्गसाधनं न भवति, स चेद्धर्मोऽपि स्यात्, तथाऽपि तदनुचिन्तनं तदनुष्ठाने चित्तस्य तात्पर्य्यं न कर्त्तव्यं, यतस्तत् बन्धाय भवति विवेकविस्मारकतया भरतवत् । यथा भरतस्य राजर्षधर्म्यमपि दीनानाथहरिणशावकस्य पोषणमित्यर्थः । तथा च जड़भरतं प्रकृत्य विष्णुपुराणे—

"चपलं चपले तस्मिन् दूरगं दूरगामिनि ।
आसीच्चेतः समासक्तं तस्मिन् हरिणपोतके ॥"

इति ॥ ८ ॥

( योगिनः बहुभिः सङ्गस्य योगभ्रंशकत्वे कुमारीशङ्खदृष्टान्तः ।— )

## बहुभिर्योगे विरोधो रागादिभिः कुमारीशङ्खवत् ॥ ९ ॥

बहुभिः सङ्गो न कार्य्यः, बहुभिः सङ्गे हि रागाद्यभिव्यक्तया कलहो भवति योगभ्रंशकः । यथा कुमारीहस्तशङ्खानामन्योऽन्यसङ्गेन झणत्कारो भवतीत्यर्थः ॥ ९ ॥

( योगिनो द्वाभ्यां सङ्गस्यापि योगभ्रंशकत्वकथनम्।— )

## द्वाभ्यामपि तथैव ॥ १० ॥

द्वाभ्यां योगेऽपि तथैव विरोधो भवति, अत एकाकिनैव स्थातव्य-मित्यर्थः। तदुक्तं—

"वासे बहूनां कलहो भवेद्वार्त्ता द्वयोरपि।
एक एव चरेत् तस्मात् कुमार्य्या इव कङ्कणम्॥"

इति॥ १०॥

"आशावैवश्यविरसे चित्ते सन्तोषवर्जिते।
म्लाने वक्त्रमिवादर्शे न ज्ञानं प्रतिबिम्बति॥"

इति वचनान्निराशता योगिनाऽनुष्ठेयेत्याह—

( आशावर्जनस्य सुखकरत्वे पिङ्गलादृष्टान्तः।— )

## निराशः सुखी पिङ्गलावत्॥ ११॥

आशां त्यक्त्वा पुरुषः सन्तोषाख्यसुखवान् भूयात् पिङ्गलावत्। यथा पिङ्गलानाम वेश्या कान्तार्थिनी कान्तमलब्ध्वा निर्विण्णा सती विहायाशां सुखिनी बभूव, तद्वदित्यर्थः। तदुक्तम्—

"आशा हि परमं दुःखं नैराश्यं परमं सुखम्।
यथा सञ्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गला॥"

इति। नन्वाशानिवृत्त्या दुःखनिवृत्तिः स्यात्, सुखं तु कुतः? साधना-भावादिति? उच्यते—चित्तस्य सत्त्वप्राधान्येन स्वाभाविकं यत् सुख-माशया पिहितं तिष्ठति, तदेवाशाविगमे लब्धवृत्तिकं भवति, तेजःप्रति-बद्धजलशैत्यवदिति न तत्र साधनापेक्षा; एतदेव चार्थं सुखमित्युच्यते इति॥ ११॥

योगप्रतिबन्धकत्वादारम्भोऽपि भोगार्थं न कर्त्तव्यः, अन्यथैव तदुपपत्ते-रित्याह—

( अनारम्भस्य सुखकरत्वे सर्पदृष्टान्तः।— )

## अनारम्भोऽपि परगृहे सुखी सर्पवत्॥ १२॥

सुखी भवेदिति शेषः। शेषं सुगमम्। तदुक्तं—

"गृहारम्भो हि दुःखाय न सुखाय कथञ्चन ।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥"

इति ॥ १२ ॥

शास्त्रेभ्यो गुरुभ्यश्च सार एव ग्राह्यः, अन्यथाऽभ्युपगमवादादिभिरंशतोऽसारभागैरन्योऽन्यविरोधेनार्थबाहुल्येन चैकाग्रताया असम्भवादित्याह—

( शास्त्रतो गुरुतश्च सारादानस्य उपयोगितायां षट्पददृष्टान्तः ।— )

## बहुशास्त्र-गुरूपासनेऽपि सारादानं षट्पदवत् ॥ १३ ॥

कर्त्तव्यमिति शेषः । अन्यत् सुगमम् । तदुक्तम्—

"अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ।
सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः ॥"

इति । मार्कण्डेयपुराणे च—

"सारभूतमुपासीत ज्ञानं यत् स्वार्थसाधकम् ।
ज्ञानानां बहुता यैषा योगविघ्नकरी हि सा ॥
इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत् ।
असौ कल्पसहस्रेषु नैव ज्ञानमवाप्नुयात् ॥"

इति ॥ १३ ॥

साधनान्तरं यथा तथा भवतु, एकाग्रतयैव समाधिपालनद्वारा विवेकसाक्षात्कारो निष्पादनीय इत्याह—

( एकाग्रतायाः समाधिसिद्धौ इषुकारदृष्टान्तः ।— )

## इषुकारवन्नैकचित्तस्य समाधिहानिः ॥ १४ ॥

यथा शरनिर्माणायैकचित्तस्येषुकारस्य पार्श्वे राज्ञो गमनेनापि न वृत्त्यन्तरनिरोधो हीयते, एवमेकाग्रचित्तस्य सर्वथाऽपि न समाधिहानिर्वृत्त्यन्तरनिरोधक्षतिर्भवति ; ततश्च विषयान्तरसञ्चाराभावे ध्येयसाक्षात्कारोऽप्यवश्यं भवतीत्येकाग्रतां कुर्यादित्यर्थः । तदुक्तं—

"तदैवमात्मन्यवरुद्धचित्तो न वेद किञ्चिद्बहिरन्तरं वा ।
यथेषुकारो नृपतिं व्रजन्तमिषौ गतात्मा न ददर्श पार्श्वे ॥"

इति ॥ १४ ॥

सत्यां शक्तौ ज्ञानबलाच्छास्त्रकृतनियमो वृथा लङ्घ्यते, तदा ज्ञाना-
निष्पत्त्यानर्थक्यं योगिनो भवतीत्याह—

( शास्त्रीयनियमलङ्घनस्य ज्ञानप्रतिबन्धकत्वे लोकदृष्टान्तः ।— )

## कृतनियमलङ्घनादानर्थक्यं लोकवत् ॥ १५ ॥

यः शास्त्रेषु कृतो योगिनां नियमः, तस्योल्लङ्घने ज्ञाननिष्पत्त्याख्योऽर्थो
न भवति, लोकवत् । यथा लोके भैषज्यादौ विहितपथ्यादीनां लङ्घने
तत्तत्सिद्धिर्न भवति, तद्वदित्यर्थः । अशक्त्या ज्ञानरक्षार्थं वा लङ्घने तु न
ज्ञानप्रतिबन्धः,

"अर्पितव्रतकर्मा तु केवलं ब्रह्मणि स्थितः ।
ब्रह्मभूतश्चरन् लोके ब्रह्मचारीति कथ्यते ॥"

इति मोक्षधर्मादिभ्यः वसिष्ठादिस्मृतिभ्यश्च ; अत एव विष्णुपुराणादौ
वृथा कर्मत्यागिन एव पाषण्डतया निन्दिताः, "पुंसां जटाधारण-
मौण्ड्यवतां वृथैव" इत्यादिनेति ॥ १५ ॥

नियमविस्मरणेऽप्यानर्थक्यमाह—

( नियमविस्मरणस्य अनर्थोत्पादकत्वे भेकीदृष्टान्तः ।— )

## तद्विस्मरणेऽपि भेकीवत् ॥ १६ ॥

सुगमम् । भेक्याश्चेयमाख्यायिका—कश्चित् राजा मृगयां गतो
विपिने सुन्दरीं कन्यां ददर्श । सा च राज्ञा भार्य्याभावाय प्रार्थिता
नियमं चक्रे, यदा मह्यं त्वया जलं प्रदर्श्यते, तदा मया गन्तव्यमिति ।
एकदा तु क्रीड़या परिश्रान्ता राजानं पप्रच्छ, कुत्र जलम् ? इति ।
राजाऽपि समयं विस्मृत्य जलमदर्शयत् । ततः सा भेकराजदुहिता काम-
रूपिणी भेकी भूत्वा जलं विवेश ; ततश्च राजा जालादिभिरन्विष्यापि न
तामविन्ददिति ॥ १६ ॥

श्रवणवत् गुरुवाक्यमीमांसाया अप्यावश्यकत्वे इतिहासमाह—

( गुरुवाक्यापरामर्शस्य ज्ञानानुत्पादकत्वे विरोचनदृष्टान्तः ।— )

## नोपदेशश्रवणेऽपि कृतकृत्यता परामर्शादृते विरोचनवत् ॥ १७ ॥

परामर्शो गुरुवाक्यतात्पर्य्यनिर्णायको विचारः, तं विना उपदेशवाक्यश्रवणेऽपि तत्त्वज्ञाननियमो नास्ति, प्रजापतेरुपदेशश्रवणेऽपीन्द्र-विरोचनयोर्मध्ये विरोचनस्य परामर्शाभावेन भ्रान्तत्वश्रुतेरित्यर्थः ; अतो गुरूपदिष्टस्य मननमपि कार्य्यमिति । दृश्यते चेदानीमप्येकस्यैव तत्त्वस्योपदेशस्य नानारूपैरर्थैः सम्भावना, अखण्डत्वमवैधर्म्यलक्षणाभेदोऽविभागश्चेति ॥ १७ ॥

अत एव च परामर्शो दृश्यते इत्याह—

( गुरुवाक्यपरामर्शस्य ज्ञानोत्पादकत्वे इन्द्रदृष्टान्तः ।— )

## दृष्टस्तयोरिन्द्रस्य ॥ १८ ॥

तच्छब्देनोक्तोच्यमानयोः परामर्शः ; तयोरिन्द्र-विरोचनयोर्मध्ये परामर्श इन्द्रस्य दृष्टश्चेत्यर्थः ॥ १८ ॥

सम्यग्ज्ञानार्थिना च गुरुसेवा बहुकालं कर्त्तव्येत्याह—

( ज्ञानार्थिनां गुरुसेवाया अवश्यकर्त्तव्यतानिर्देशः ।— )

## प्रणति-ब्रह्मचर्य्योपसर्पणानि कृत्वा सिद्धिर्बहुकालात् तद्वत् ॥ १९ ॥

तद्वदिन्द्रस्येवान्यस्यापि गुरौ प्रणति-वेदाध्ययन-सेवादीन् कृत्वैव सिद्धिस्तत्त्वार्थस्फूर्त्तिर्भवति, नान्यथेत्यर्थः । तथा च श्रुतिः,—

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥" ( श्वेताश्व० ६।२३ )

इति ॥ १९ ॥

( ज्ञानोत्पत्तौ कालनियमाभावे वामदेवदृष्टान्तः ।— )

## न कालनियमो वामदेववत् ॥ २० ॥

ऐहिकसाधनादेव भवतीत्यादिर्ज्ञानोदये कालनियमो नास्ति, वाम-

देववत्। वामदेवस्य जन्मान्तरीयसाधनेभ्यो गर्भेऽपि यथा ज्ञानोदयः, तथा अन्यस्यापीत्यर्थः। तथा च श्रुतिः,—"तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्य्यश्चेति, तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति" (बृह० उ०१।४।१०) इत्यादिरिति। अहं मनुरभव-मित्यादिकमवैधर्म्यलक्षणाभेदपरं, सर्वव्यापकताख्यब्रह्मतापरं वा। "सर्वं समाप्नोषि ततोऽसि सर्वः" (गीता० ११।४०) इत्यादिस्मरणात्। स इदं सर्वं भवतीति त्वौपाधिकपरिच्छेदस्यात्यन्तोच्छेदपरमिति ॥ २० ॥

ननु सगुणोपासनाया अपि ज्ञानहेतुत्वश्रवणात् तत एव ज्ञानं भविष्यति, किमर्थं दुष्करसूक्ष्मयोगचर्य्येति? तत्राह—

( योगानुष्ठानस्य साक्षात् ज्ञानहेतुत्वनिर्देशः।— )

## अध्यस्तरूपोपासनात् पारम्पर्य्येण यज्ञोपासकानामिव ॥ २१ ॥

सिद्धिरित्यनुषज्यते। अध्यस्तरूपैः पुरुषाणां ब्रह्म-विष्णु-रुद्रादीना-मुपासनात् पारम्पर्य्येण ब्रह्मादिलोकप्राप्तिक्रमेण सत्त्वशुद्धिद्वारा वा ज्ञाननिष्पत्तिः, न साक्षात्, यथा याज्ञिकानामित्यर्थः ॥ २१ ॥

ब्रह्मादिलोकपरम्परयाऽपि ज्ञाननिष्पत्तौ नास्ति नियम इत्याह—

(ब्रह्मादिलोकप्राप्तस्यापि जन्मश्रुतेर्ज्ञाननिष्पत्तौ नियमाभावकथनम्।—)

## इतरलाभेऽप्यावृत्तिः पञ्चाग्नियोगतो जन्मश्रुतेः ॥ २२ ॥

निर्गुणात्मन इतरस्याध्यस्तरूपस्य ब्रह्मलोकपर्य्यन्तस्य लाभेऽप्यावृत्ति-रस्ति, कुतः? देवयानपथेन ब्रह्मलोकं गतस्यापि द्यु-पर्जन्य-धराऽमर-योषिद्रूपाग्निपञ्चके पञ्चाहुतितो जन्मश्रवणात्, छान्दोग्यपञ्चमप्रपाठके— "असौ वाव लोको गौतमाग्निः" (५।४।१) इत्यादिनेत्यर्थः। यच्च ब्रह्मलोकादनावृत्तिवाक्यं, तत् तत्रैव प्रायेणोत्पन्नज्ञानपुरुषविषयक-मिति ॥ २२ ॥

ज्ञाननिष्पत्तिर्विरक्तस्यैवेत्यत्र निदर्शनमाह—

( विरक्तस्य ज्ञाननिष्पत्तौ हंस-क्षीरदृष्टान्तः ।— )

## विरक्तस्य हेयहानमुपादेयोपादानं हंस-क्षीरवत् ॥ २३ ॥

विरक्तस्यैव हेयानां प्रकृत्यादीनां हानम्, उपादेयस्य चात्मन उपादानं भवति। यथा दुग्ध-जलयोरेकीभावापन्नयोर्मध्येऽसारजलत्यागेन सार-भूतक्षीरोपादानं हंसस्यैव, न तु काकादेरित्यर्थः ॥ २३ ॥

सिद्धपुरुषसङ्गादप्येतदुभयं भवतीत्याह—

( सत्सङ्गस्यापि ज्ञाननिष्पत्तौ हेतुत्वकथनम् ।— )

## लब्धातिशययोगाद्वा तद्वत् ॥ २४ ॥

लब्धोऽतिशयो ज्ञानकाष्ठा येन तत्सङ्गादप्युक्तं भवति हंसवदेवेत्यर्थः, यथा अलर्कस्य दत्तात्रेयसङ्गमात्रादेव स्वयं विवेकः प्रादुरभूदिति ॥ २४ ॥

रागिसङ्गो न कार्य्य इत्याह—

( रागिसङ्गस्य अकर्त्तव्यतायां शुकदृष्टान्तः ।— )

## न कामचारित्वं रागोपहते शुकवत् ॥ २५ ॥

रागोपहते पुरुषे कामतः सङ्गो न कर्त्तव्यः, शुकवत्। यथा शुकपक्षी प्रकृष्टरूप इति कृत्वा कामचारं न करोति, रूपलोलुपैर्बन्धनभयात्, तद्वदित्यर्थः ॥ २५ ॥

रागिसङ्गे तु दोषमाह—

( रागिसङ्गस्य सदोषत्वे शुकदृष्टान्तः ।— )

## गुणयोगात् बद्धः शुकवत् ॥ २६ ॥

तेषां सङ्गे तु गुणयोगात् तदीयरागादियोगात् बद्धः स्यात्, शुकवदेव। यथा शुकपक्षी व्याधस्य गुणैः रज्जुभिर्बद्धो भवति, तद्वदित्यर्थः। अथवा गुणितया गुणलोलुपैर्बद्धो भवति, शुकवदित्यर्थः। अत्रैवोक्तं सौभरिणा—

"स मे समाधिर्जलवासमित्रमत्स्यस्य सङ्गात् सहसैव नष्टः।
परिग्रहः सङ्गकृतो ममायं परिग्रहोत्थाश्च महाविधित्साः॥"

इति ॥ २६ ॥

वैराग्यस्याप्युपायमवधारयति द्वाभ्यां—

( भोगस्य रागवर्द्धकत्वे मुनिदृष्टान्तः ।— )

## न भोगाद्रागशान्तिर्मुनिवत् ॥ २७ ॥

यथा मुनेः सौभरेर्भोगान्न रागशान्तिरभूत्, एवमन्येषामपि न भवतीत्यर्थः। तदुक्तं सौभरिणैव—

"आ-मृत्युतो नैव मनोरथानामन्तोऽस्ति विज्ञातमिदं मयाऽद्य ।
मनोरथासक्तिपरस्य चित्तं न जायते वै परमार्थसङ्गि ॥"

इति ॥ २७ ॥

अपि तु—

( भोगदोषदर्शनात् रागशान्तौ मुनिदृष्टान्तः ।— )

## दोषदर्शनादुभयोः ॥ २८ ॥

उभयोः प्रकृति-तत्कार्य्ययोः परिणामित्व-दुःखात्मकत्वादिदोषदर्शनादेव रागशान्तिर्भवति, मुनिवदेवेत्यर्थः। सौभरेर्हि सङ्गदोषदर्शनादेव सङ्गे वैराग्यं श्रूयते—

"दुःखं यदेवैकशरीरजन्म तथाऽर्द्धसङ्ख्यं तदिदं प्रसूतम् ।
परिग्रहेण क्षितिपात्मजानां सुतैरनेकैर्बहुलीकृतं तत् ॥"

इति ॥ २८ ॥

रागादिदोषोपहतस्योपदेशग्रहणेऽप्यनधिकारमाह—

( रागिण उपदेशग्रहणानधिकारित्वे अजदृष्टान्तः ।— )

## न मलिनचेतस्युपदेशबीजप्ररोहोऽजवत् ॥ २९ ॥

उपदेशरूपं यत् ज्ञानवृक्षस्य बीजं, तस्याङ्कुरोऽपि रागादिमलिनचित्ते नोत्पद्यते, अजवत्। यथा अजनाम्नि नृपे भार्य्याशोकमलिनचित्ते वशिष्ठेनोक्तस्याप्युपदेशबीजस्य नाङ्कुर उत्पन्न इत्यर्थः ॥ २९ ॥

किं बहुना—

( रागदुष्टस्य उपदेशग्रहणानधिकारित्वे दृष्टान्तान्तरम् ।— )

## नाभासमात्रमपि मलिनदर्पणवत् ॥ ३० ॥

आपातज्ञानमपि मलिनचेतस्युपदेशान्न जायते, विषयान्तर-

मच्चारादिभिः प्रतिबन्धात् । यथा मलैः प्रतिबन्धान्मलिनदर्पणेऽर्थो न प्रतिबिम्बति तद्वदित्यर्थः ॥ ३० ॥

यदि वा कथञ्चित् ज्ञानं जायेत, तथाऽप्युपदेशानुरूपं न भवेदित्याह—
( रागिणः कथञ्चित् ज्ञाने जातेऽपि उपदेशानुरूपज्ञानाभावोक्तिः ।— )

## न तज्जस्यापि तद्रूपता पङ्कजवत् ॥ ३१ ॥

तस्मादुपदेशाज्जातस्यापि ज्ञानस्योपदेशानुरूपता न भवति, सामग्र्याः ज्ञानवद्दोषात्, पङ्कजवत् । यथा वीजस्योत्तमत्वेऽपि पङ्कदोषाद्वीजानुरूपता पङ्कजस्य न भवति, तद्वदित्यर्थः । पङ्कस्थानीयं शिष्यचित्तम् ॥ ३१ ॥

ननु ब्रह्मलोकादिष्वैश्वर्य्येणैव पुरुषार्थतासिद्धा किमर्थमेतावता प्रयासेन मोक्षाय ज्ञाननिष्पादनम् ? तत्राह—

( ऐश्वर्य्ययोगस्यापि मोक्षासाधकत्वनिर्देशः ।— )

## न भूतियोगेऽपि कृतकृत्यता उपास्यसिद्धि-वदुपास्यसिद्धिवत् ॥ ३२ ॥

ऐश्वर्य्ययोगेऽपि कृतकृत्यता कृतार्थता नास्ति, क्षयातिशयदुःखेऽनुगमात्, उपास्यसिद्धिवत् । यथोपास्यानां ब्रह्मादीनां सिद्धियोगेऽपि न कृतकृत्यता, तेषामपि योगनिद्रादौ योगाभ्यासश्रवणात्, तथैव तदुपासनया प्राप्त-तदैश्वर्य्यस्यापीत्यर्थः । उपास्यसिद्धिवदिति वीप्सा अध्यायसमाप्तौ ॥ ३२ ॥

अध्यायत्रितयोक्तस्य विवेकस्यान्तरङ्गकम् ।
आख्यायिकाभिः सम्प्रोक्तमत्राध्याये समासतः ॥

इति श्रीविज्ञानभिक्षुनिर्मिते कापिलसाङ्ख्यप्रवचनस्य भाष्ये
आख्यायिकाऽध्यायश्चतुर्थः ॥ ४ ॥

# पञ्चमोऽध्यायः ।

स्वशास्त्रसिद्धान्तः पर्य्याप्तः । इतः परं स्वशास्त्रे परेषां पूर्वपक्षानपाकर्त्तुं पञ्चमोध्याय आरभ्यते । तत्रादावादिसूत्रेऽथशब्देन यन्मङ्गलं कृतं, तत् व्यर्थमित्याक्षेपं समाधत्ते—

( मङ्गलाचरणस्य अवश्यकर्त्तव्यतायां प्रमाणप्रदर्शनम् ।— )

**मङ्गलाचरणं शिष्टाचारात् फलदर्शनात् श्रुतितश्चेति ॥ १ ॥**

मङ्गलाचरणं यत् कृतं तस्यैतैः प्रमाणैः कर्त्तव्यतासिद्धिरित्यर्थः । इति-शब्दो हेत्वन्तराकाङ्क्षानिरासार्थः ॥ १ ॥

ईश्वरासिद्धेरिति यदुक्तं तन्नोपपद्यते, कर्मफलदातृतया तत्सिद्धेरिति ये पूर्वपक्षिणस्तान्निराकरोति—

( ईश्वरसिद्धिविषयक-पूर्वपक्षिमतखण्डनम् ।— )

**नेश्वराधिष्ठिते फलनिष्पत्तिः कर्मणा तत्सिद्धेः ॥२॥**

ईश्वराधिष्ठिते कारणे कर्मफलरूपपरिणामस्य निष्पत्तिर्न युक्ता, आवश्यकेन कर्मणैव फलनिष्पत्तिसम्भवादित्यर्थः ॥ २ ॥

ईश्वरस्य फलदातृत्वमपि न घटते इत्याह सूत्रैः,—

( ईश्वरस्य फलदातृत्वाभावोक्तिः ।— )

**स्वोपकारादधिष्ठानं लोकवत् ॥ ३ ॥**

ईश्वराधिष्ठातृत्वे स्वोपकारार्थमेव लोकवदधिष्ठानं स्यादित्यर्थः ॥ ३ ॥

भवत्वीश्वरस्याप्युपकारः, का क्षतिः ? इत्याशङ्क्याह—

( स्वोपकारार्थमीश्वरस्याधिष्ठातृत्वस्वीकारे दोषप्रदर्शनम् ।— )

**लौकिकेश्वरवदितरथा ॥ ४ ॥**

ईश्वरस्याप्युपकारस्वीकारे लौकिकेश्वरवदेव सोऽपि संसारी स्यात्, अपूर्णकामतया दुःखादिप्रसङ्गादित्यर्थः ॥ ४ ॥

तथैव भवतु ? इत्याशङ्क्याह—

( ईश्वरस्य संसारित्वस्वीकारे दोषप्रदर्शनम्।— )

## पारिभाषिको वा ॥ ५ ॥

संसारसत्त्वेऽपि चेदीश्वरः, तर्हि सर्गाद्युत्पन्नपुरुषे परिभाषामात्रमस्माक-मिव भवतामपि स्यात्, संसारित्वाप्रतिहतेच्छत्वयोर्विरोधान्नित्यैश्वर्या-नुपपत्तेरित्यर्थः ॥ ५ ॥

ईश्वरस्याधिष्ठातृत्वे बाधकान्तरमाह—

( ईश्वरस्य अधिष्ठातृत्वस्वीकारे बाधकान्तरप्रदर्शनम्।— )

## न रागादृते तत्सिद्धिः प्रतिनियतकारणत्वात् ॥ ६ ॥

किञ्च, रागं विना नाधिष्ठातृत्वं सिध्यति, प्रवृत्तौ रागस्य प्रतिनियत-कारणत्वादित्यर्थः। उपकार इष्टार्थसिद्धिः, रागस्तूत्कटेच्छेति न पौन-रुक्त्यम् ॥ ६ ॥

नन्वेवमस्तु रागोऽपीश्वरे ? तत्राह—

( ईश्वरस्य रागित्वस्वीकारे दोषप्रदर्शनम्।— )

## तद्योगेऽपि न नित्यमुक्तः ॥ ७ ॥

रागयोगेऽपि स्वीक्रियमाणे स नित्यमुक्तो न स्यात्, ततश्च ते सिद्धान्त-हानिरित्यर्थः ॥ ७ ॥

किञ्च, प्रकृतिं प्रत्यैश्वर्यं प्रकृतिपरिणामभूतेच्छादिना न सम्भवति, अन्योऽन्याश्रयात्। नित्येच्छादिकं च प्रकृतौ न युक्तं, श्रुति-स्मृतिसिद्ध-साम्यावस्थाऽनुपपत्तेः; अतः प्रकारद्वयमवशिष्यते, तद्यथा—ऐश्वर्यं किं प्रधानशक्तित्वेनास्मदभिमतानामिच्छादीनां साक्षादेव चेतनसम्बन्धात्? किं वा अयस्कान्तमणिवत् सन्निधिसत्तामात्रेण प्रेरकत्वादिति? तत्राद्यं पक्षं दूषयति—

( प्रधानशक्तीच्छादिसम्बन्धात् पुरुषस्य ईश्वरत्वस्वीकारे दोषप्रदर्शनम्।— )

## प्रधानशक्तियोगाच्चेत् सङ्गापत्तिः ॥ ८ ॥

प्रधानशक्तेरिच्छादेः पुरुषे योगात् पुरुषस्यापि धर्मसङ्गापत्तिः, तथा

च "स यत् तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः" (बृह० उ० ४।३।१५) इत्यादिश्रुतिविरोध इत्यर्थः॥ ८॥

अन्ये त्वाहु—

(प्रधानशक्त्युक्त्यादीनां सन्निधिसत्तामात्रात् पुरुषस्य ईश्वरत्वस्वीकारे दोषप्रदर्शनम्।—)

## सत्तामात्राच्चेत् सर्वैश्वर्य्यम्॥ ९॥

अयस्कान्तवत् सन्निधिसत्तामात्रेण चेच्चेतनैश्वर्य्यं,तर्हि सर्वेषामेव तत्तत्सर्गेषु भोक्तॄणां पुंसामविशेषेणैश्वर्य्यमस्मदभिप्रेतमेव सिद्धम्, अखिलभोक्तृसंयोगादेव प्रधानेन महदादिसर्जनादिति; ततश्चैक एवेश्वर इति भवत्सिद्धान्तहानिरित्यर्थः॥ ९॥

स्यादेतत्, ईश्वरसाधकप्रमाणविरोधेनैतेऽसत्तर्का एव, अन्यथैवंविधासत्तर्कसहस्रैः प्रधानमपि बाधितुं शक्यत इति? तत्राह—

(ईश्वरसिद्धौ प्रमाणाभावोक्तिः।—)

## प्रमाणाभावान्न तत्सिद्धिः॥ १०॥

तत्सिद्धिर्नित्येश्वरे तावत् प्रत्यक्षं नास्तीत्यनुमान-शब्दावेव प्रमाणे वक्तव्ये, ते च न सम्भवत इत्यर्थः॥ १०॥

असम्भवमेव प्रतिपादयति सूत्राभ्याम्—

(ईश्वरसिद्धौ अनुमानप्रमाणस्य असम्भवत्वप्रतिपादनम्।—)

## सम्बन्धाभावान्नानुमानम्॥ ११॥

सम्बन्धो व्याप्तिः, अभावोऽसिद्धिः; तथा च, 'महदादिकं सकर्तृकं कार्य्यत्वात्' इत्याद्यनुमानेष्वप्रयोजकत्वेन व्याप्यत्वासिद्ध्या नेश्वरेऽनुमानमित्यर्थः॥ ११॥

नापि शब्द इत्याह—

(ईश्वरसिद्धौ शब्दप्रमाणस्य असम्भवत्वप्रतिपादनम्।—)

## श्रुतिरपि प्रधानकार्य्यत्वस्य॥ १२॥

अपञ्चे प्रधानकार्य्यत्वस्यैव श्रुतिरस्ति, न चेतनकारणत्वे। यथा—

"अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाः ।" ( श्वेताश्व० ४।५ )

"तद्धेदं तर्ह्यव्याकृतमासीत्, तन्नाम-रूपाभ्यां व्याक्रियत" ( बृह० उ० १।४।७ ) इत्यादिरित्यर्थः । या च "तदैक्षत बहु स्याम्" ( छान्दो०६।२।३ ) इत्यादिश्चेतनकारणताश्रुतिः, सा सर्गादावुत्पन्नस्य महत्तत्त्वोपाधिकस्य महापुरुषस्य जन्यज्ञानपरा ; किं वा बहुभवनानुरोधात् प्रधान एव "कूलं पिपतिषति" इतिवत् गौणी ; अन्यथा "साक्षी चेता केवलो निर्गुणश्च" ( श्वेताश्व० ६।११ ) इत्यादिश्रुत्युक्तापरिणामित्वस्य पुरुषेऽनुपपत्तेरिति। अयं चेश्वरप्रतिषेध ऐश्वर्य्ये वैराग्यार्थमीश्वरज्ञानं विनाऽपि मोक्षप्रतिपादनार्थं च प्रौढ़िवादमात्रमिति प्रागेव व्याख्यातम् ; अन्यथा जीवव्यावृत्तस्येश्वरनित्यत्वादेर्गौणत्वकल्पनागौरवम् । औपाधिकानां नित्यज्ञानेच्छादीनां महदादिपरिणामानां चाङ्गीकारेण कौटस्थ्याद्युपपत्तेरित्यादिकं ब्रह्ममीमांसायां द्रष्टव्यमिति ॥ १२ ॥

नाविद्यातो बन्ध इति यत् सिद्धान्तितं प्रथमपादे, तत्र परमतं विस्तरतः प्रघट्टकेन दूषयति—

( अविद्यातो बन्धः इति परमतदूषणम् ।— )

## नाविद्याशक्तियोगो निःसङ्गस्य ॥ १३ ॥

परे प्राहुः, प्रधानं नास्ति, किन्तु ज्ञाननाश्यानाद्यविद्याऽऽख्या शक्तिश्चेतने तिष्ठति, तत एव चेतनस्य बन्धः, तन्नाशे च मोक्ष इति । तत्रेदमुच्यते, निःसङ्गतया चेतनस्याविद्याशक्तियोगः साक्षान्न सम्भवतीति । अविद्या ह्यस्मिंस्तदाकारता, सा च विकारविशेषोऽधिकारहेतुसंयोगरूपं सङ्गं विना न सम्भवतीत्यर्थः ॥ १३ ॥

नन्वविद्यावशादेवाविद्यायोगो वक्तव्यः, तथा चापारमार्थिकत्वान्न तया सङ्ग इति ? तत्राह—

( अविद्यावशादविद्यायोगस्वीकारे दोषप्रदर्शनम् ।— )

## तद्योगे तत्सिद्धावन्योऽन्याश्रयत्वम् ॥ १४ ॥

अविद्यायोगादविद्यासिद्धौ चान्योऽन्याश्रयत्वमात्माश्रयत्वम्, अनवस्था वेति शेषः ॥ १४ ॥

ननु बीजाङ्कुरवदनवस्था न दोषाय ? इत्याशङ्काह—

( अनवस्थायाः दोषाभावोक्तिखण्डनम् ।— )

## न बीजाङ्कुरवत् सादिसंसारश्रुतेः ॥ १५ ॥

बीजाङ्कुरवदप्यनवस्था न सम्भवति, पुरुषाणां संसारस्याविद्याद्यखिलानर्थरूपस्य सादित्वश्रुतेः, प्रलय-सुषुप्त्यादावभावश्रवणादित्यर्थः। "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" ( बृह० उ० २।४।१२) इत्यादिश्रुतिभिर्हि प्रलयादौ बुद्धिवृत्त्यभावेन तदौपाधिकाविद्याविद्याद्यखिलसंसारशून्यं चिन्मात्रत्वं पुरुषाणां सिद्धमिति। तस्मादविद्याऽप्याविद्यकीति वाङ्मात्रम् ॥ १५ ॥

नन्वस्माकमविद्या पारिभाषिकी, न तु योगोक्तानात्मन्यात्मबुद्ध्यादिरूपा ; तथा च, भवतां प्रधानवदेवास्माकमपि तस्या अखण्डानादितया पुरुषनिष्ठत्वेऽपि नासङ्गताहानिरित्याशङ्कायां परिकल्पितमविद्याशब्दार्थं विकल्प्य दूषयति—

( अविद्याशब्दस्यार्थनिर्णये परमतखण्डनम् ।— )

## विद्यातोऽन्यत्वे ब्रह्मबाधप्रसङ्गः ॥ १६ ॥

यदि विद्याऽन्यत्वमेवाविद्याशब्दार्थः, तर्हि तस्य ज्ञाननाश्यतया ब्रह्मण आत्मनोऽपि बाधो नाशः प्रसज्यते, विद्याभिन्नत्वादित्यर्थः ॥ १६ ॥

( विद्यया अविद्याया अबाध्यत्वे दोषोक्तिः ।— )

## अबाधे नैष्फल्यम् ॥ १७ ॥

यदि त्वविद्यारूपमपि विद्यया न बाध्येत, तर्हि विद्यावैफल्यम्, अविद्यानिवर्त्तकत्वाभावादित्यर्थः ॥ १७ ॥

पक्षान्तरं दूषयति—

( विद्याबाध्या अविद्या इति मते दोषप्रदर्शनम् ।— )

## विद्याबाध्यत्वे जगतोऽप्येवम् ॥ १८ ॥

यदि पुनर्विद्यया चेतने बाध्यत्वमेवाविद्यात्वमुच्यते, तथा सति जगतः प्रकृति-महदाद्यखिलप्रपञ्चस्याप्येवमविद्यात्वं स्यात्, "अथात आदेशो नेति नेति" (बृह० उ० २।३।६) "अस्थूलमनणु" ( बृह० उ० ३।८।८ ) इत्यादि-

श्रुतिभिर्मिथ्याज्ञानस्यैव प्रकृत्यादेरप्यात्मनि बाधितत्वादित्यर्थः । तथा चाखिलप्रपञ्चस्यैवाविद्यात्वे सत्येकस्य ज्ञानिनाविद्यानाशादन्यैरपि प्रपञ्चो न दृश्येतेति भावः । विद्यानाश्यत्वं चाविद्यात्वं वक्तुं न शक्यते, विद्यानाश्यत्वेन विद्यानाश्यग्रहासम्भवादात्माश्रयादिति ॥ १८ ॥

( अविद्याया विद्याबाध्यत्वस्वीकारे दोषप्रदर्शनम् ।— )

## तद्रूपत्वे सादित्वम् ॥ १९ ॥

भवतु वा यथाकथञ्चित् विद्याबाध्यत्वमेवाविद्यात्वं, तथाऽपि तादृश-वस्तुनः सादित्वमेव पुरुषेषु, न त्वनादित्वं सम्भवति, "विज्ञानघन एव" ( बृह० उ० २।४।१२ ) इत्याद्युक्तश्रुतिभिः प्रलयादौ पुरुषस्य चिन्मात्रत्व-सिद्धेरित्यर्थः । अस्मन्मते च प्रलये पुरुषस्यासंसारित्वेऽपि स्वतन्त्रनित्य-प्रधानसंयोगात् पुनर्बन्ध उपपादितः, तथा प्रधानसंयोगेऽपि प्राग्भवीया-विवेक एव वासनाऽदृष्टादिद्वारा निमित्तमित्यप्युक्तम्; तस्मात् योग-दर्शनोक्तादन्या नास्त्यविद्या, सा च बुद्धिधर्म एव, न पुरुषधर्म इति सिद्धम् ॥ १९ ॥

अत्रैवाध्याये कर्मनिमित्ता प्रधानप्रवृत्तिरिति यदुक्तं, तत्र परपूर्वपक्षं समाधत्ते प्रघट्टकेन—

( कर्मनिमित्ता प्रधानप्रवृत्तिरित्युक्तौ प्रतिपक्षमतसमाधानम् ।— )

## न धर्मापलापः प्रकृतिकार्य्यवैचित्र्यात् ॥ २० ॥

अप्रत्यक्षतया धर्मापलापो न सम्भवति, प्रकृतिकार्य्येषु वैचित्र्यान्यथा-ऽनुपपत्त्या तदनुमानादित्यर्थः ॥ २० ॥

प्रमाणान्तरमप्याह—

( प्रत्यक्षाभावात् धर्मापलापस्य असम्भवतायां प्रमाणप्रदर्शनम् ।— )

## श्रुति-लिङ्गादिभिस्तत्सिद्धिः ॥ २१ ॥

"पुण्यो वै पुण्येन कर्मणा भवति, पापः पापेन" ( बृह० उ० ३।२।१३ ) इत्यादिश्रुतेः, "स्वर्गकामोऽश्वमेधेन यजेत" इति विध्यादिरूपाल्लिङ्गात् योगिप्रत्यक्षादिभिश्च तत्सिद्धिरित्यर्थः ॥ २१ ॥

प्रत्यक्षाभावाद्धर्मासिद्धिरिति परस्य हेतुमाभासीकरोति—

( प्रत्यक्षाभावात् धर्माभाव इति मतस्य खण्डनान्तरम् ।— )

## न नियमः प्रमाणान्तरावकाशात् ॥ २२ ॥

प्रत्यक्षाभावात् वस्त्वभाव इति नियमो नास्ति, प्रमाणान्तरेणापि वस्तूनां विषयीकरणादित्यर्थः ॥ २२ ॥

धर्मवदधर्ममपि साधयति—

( धर्माभाववत् अधर्माभाव इति मतस्यापि खण्डनोक्तिः ।— )

## उभयत्राप्येवम् ॥ २३ ॥

धर्मवदधर्मेऽप्येवं प्रमाणानीत्यर्थः ॥ २३ ॥

ननु विध्यन्यथाऽनुपपत्तिरूपया अर्थापत्त्या धर्मसिद्धिः, सा च नास्त्यधर्मे, इति कथं श्रौतलिङ्गातिदेशोऽधर्मः ? इति चेन्न इत्याह—

( अधर्मसद्भावे स्वमतप्रदर्शनम् ।— )

## अर्थात् सिद्धिश्चेत् समानमुभयोः ॥ २४ ॥

यतः समानमुभयोर्धर्माधर्मयोर्लिङ्गमस्ति, "परदारान्न गच्छेत्" इति निषेधविध्यादेरेवाधर्मलिङ्गत्वादित्यर्थः ॥ २४ ॥

ननु धर्मादिकं चेत् स्वीकृतं, तर्हि पुरुषाणां धर्मादिमत्त्वेन परिणामाद्यापत्तिः ? इत्याशङ्कां परिहरति—

( धर्मादीनामन्तःकरणधर्मत्वनिर्देशः ।— )

## अन्तःकरणधर्मत्वं धर्मादीनाम् ॥ २५ ॥

आदि-शब्देन वैशेषिकशास्त्रोक्ताः सर्वे आत्मविशेषगुणा गृह्यन्ते ; न चैवं प्रलयेऽन्तःकरणाभावाद्धर्मादिकं क्व तिष्ठतु ? इति वाच्यम्, आकाशवदन्तःकरणस्यात्यन्तविनाशाभावात् । अन्तःकरणं हि कार्य्य-कारणोभयरूपमिति प्रागेव व्याख्यातम् ; अतः कारणावस्थे प्रकृत्यंशविशेषेऽन्तःकरणे धर्माधर्मसंस्कारादिकं तिष्ठतीति ॥ २५ ॥

स्यादेतत् ; प्रकृतिकार्य्यवैचित्र्यात् श्रुत्यादेश्च धर्मादिसिद्धिरिति यदुक्तं, तदयुक्तं, त्रिगुणात्मकप्रकृतेस्तत्कार्य्याणां च भवतां श्रुत्यैव बाधात्. "साक्षी चेता केवलो निर्गुणश्च" ( श्वेताश्व० ६।११ ) "अथात आदेशो नेति नेति"

( बृह० उ० २।३।६ )"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्" ( कठ० ३।१५ ) इत्यादिना, "न निरोधो न चोत्पत्तिः" ( गौड़पाद० का० २।३२ ) "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" ( छांन्दो० ६।१।४ ) इत्यादिना चेति ? तदेतत् परिहरति—

( गुणादीनां नात्यन्तबाधोक्तिः ।— )

## गुणादीनां च नात्यन्तबाधः ॥ २६ ॥

गुणानां सत्त्वादीनां, तद्धर्माणां च सुखादीनां, तत्कार्य्याणामपि महदादीनां स्वरूपतो नास्ति बाधः; किन्तु संसर्गत एव चेतने बाधः, अयसोष्ण्यबाधवत् ; तथा कालत एवावस्थादिभिर्बाधो गुणाद्यखिलपरिणामिन इत्यर्थः ॥ २६ ॥

कुतः पुनः स्वरूपत एव बाधो न भवति, स्वप्नमनोरथादिपदार्थवत् ? इत्याकाङ्क्षायामाह—

( गुणादीनां स्वरूपतो बाधाभावे हेतुप्रदर्शनम् ।— )

## पञ्चावयवयोगात् सुखसंवित्तिः ॥ २७ ॥

अत्र विशिष्य पक्षीकरणाय विवादविषयैकदेशस्य सुखमात्रस्य ग्रहणं सर्वविषयोपलक्षकम् । "सुखादिसंवित्तिः" इति पाठस्तु समीचीनः । पञ्चावयवाश्च न्यायस्य प्रतिज्ञा-हेतूदाहरणोपनयन-निगमनानि, तेषां योगान्मेलनात् सुखाद्यखिलपदार्थसिद्धिरित्यर्थः । प्रयोगश्चायं—सुखं सत्, अर्थक्रियाकारित्वात् ; यद्यदर्थक्रियाकारि तत् तत् सत्, यथा चेतनः ; पुलकादिरूपार्थक्रियाकारि च सुखं, तस्मात् सदिति । चेतनानां चाविकारित्वेऽपि विषयप्रकाश एवार्थक्रियेति । नास्तिकं प्रति च व्यतिरेक्यनुमानं कर्त्तव्यं, तत्र च शशशृङ्गादिर्दृष्टान्त इति ॥ २७ ॥

प्रत्यक्षातिरिक्तं प्रमाणमेव न भवति, व्याप्त्याद्यसिद्धेरिति चार्वाकः पुनः शङ्कते—

( प्रत्यक्षातिरिक्तप्रमाणाभाव इति चार्वाकमतोत्थापनम् ।— )

## न सकृद्ग्रहणात् सम्बन्धसिद्धिः ॥ २८ ॥

सकृत् सहचारग्रहणात् सम्बन्धो व्याप्तिर्न सिध्यति, भूयस्त्वं चानवुगतम् ; अतो व्याप्तिग्रहासम्भवान्नानुमानेनार्थसिद्धिरित्यर्थः ॥ २८ ॥

समाधत्ते—

( अनुमानादेः प्रमाणत्वस्थापनाय चार्वाकमतखण्डनम् ।— )

## नियतधर्मसाहित्यमुभयोरेकतरस्य वा व्याप्तिः ॥ २९ ॥

धर्मसाहित्यं धर्मतायां साहित्यं, सहचार इति यावत् ; तथा चोभयोः साध्य-साधनयोरेकतरस्य साधनमात्रस्य वा नियतोऽव्यभिचरितो यः सहचारः स व्याप्तिरित्यर्थः । उभयोरिति समव्याप्तिपक्षे प्रोक्तं, नियमश्चानुकूलतर्केण ग्राह्य इति न व्याप्तिग्रहासम्भव इति भावः ॥ २९ ॥

व्याप्तिर्वक्ष्यमाणशक्त्यादिरूपं पदार्थान्तरं न भवतीत्याह—

( व्याप्तेः पदार्थान्तरत्वाभावोक्तिः ।— )

## न तत्त्वान्तरं वस्तुकल्पनाप्रसक्तेः ॥ ३० ॥

नियतधर्मसाहित्यातिरिक्ता व्याप्तिर्न भवति, व्याप्तित्वाश्रयस्य वस्तुनोऽपि कल्पनाप्रसङ्गात् । अस्माभिस्तु सिद्धवस्तुन एव व्याप्तित्वमात्रं कल्प्यमित्यर्थः ॥ ३० ॥

परमतमाह—

( व्याप्तेः पदार्थान्तरत्वे परमतप्रदर्शनम् ।— )

## निजशक्त्युद्भवमित्याचार्य्याः ॥ ३१ ॥

अपरे त्वाचार्य्या व्याप्यस्य स्वशक्तिजन्यं शक्तिविशेषरूपं तत्त्वान्तरमेव व्याप्तिरित्याहुः । निजशक्तिमात्रं तु यावद्द्रव्यस्थायितया न व्याप्तिः, देशान्तरगतस्य धूमस्यापि वह्न्यव्याप्यत्वात् । देशान्तरगमनेन च सा शक्तिर्नश्यत इति नोक्तलक्षणेऽतिव्याप्तिः । स्वमते तूत्पत्तिकालावच्छिन्नत्वेन धूमो विशेषणीय इति भावः ॥ ३१ ॥

( व्याप्तेः पदार्थान्तरत्वे पञ्चशिखमतप्रदर्शनम् ।— )

## आधेयशक्तियोग इति पञ्चशिखः ॥ ३२ ॥

बुद्ध्यादिषु प्रकृत्यादिव्याप्यताव्यवहारादाधारताशक्तिर्व्यापकता, आधेयताशक्तिमत्त्वं च व्याप्यत्वमिति पञ्चशिख इत्यर्थः ॥ ३२ ॥

नन्वाधेयशक्तिः किमर्थं कल्प्यते, व्याप्यस्य वस्तुनः स्वरूपशक्तिरेव व्याप्तिरस्तु ? तत्राह—

( व्याप्यस्य स्वरूपशक्तेः व्याप्तित्वस्वीकारे दोषप्रदर्शनम् ।— )

## न स्वरूपशक्तिर्नियमः पुनर्वादप्रसक्तेः ॥ ३३ ॥

स्वरूपशक्तिस्तु नियमो व्याप्तिर्न भवति, पौनरुक्त्यप्रसङ्गात् ; घटः कलश इतिवत् बुद्धिर्व्याप्येत्यत्राप्यर्थाभेदेनेत्यर्थः । स्वरूपमिति वक्तव्ये शक्तिपदोपादानं व्याप्तेः व्याप्यधर्मतोपपादनाय ॥ ३३ ॥

पौनरुक्त्यं स्वयमेव विवृणोति—

( व्याप्यस्य स्वरूपशक्तेः व्याप्तित्वस्वीकारे पुनरुक्तिदोषस्य विवरणम् ।— )

## विशेषणानर्थक्यप्रसक्तेः ॥ ३४ ॥

पूर्वसूत्रे एव व्याख्यातप्रायमिदम् ॥ ३४ ॥

दूषणान्तरमाह—

( व्याप्यस्य स्वरूपशक्तेः व्याप्तित्वस्वीकारे दोषान्तरप्रदर्शनम् ।— )

## पल्लवादिष्वनुपपत्तेश्च ॥ ३५ ॥

पल्लवादिषु वृक्षादिव्याप्यताऽस्ति, स्वरूपशक्तिमात्रन्तु तस्य लक्षणं न सम्भवति, छिन्नपल्लवेऽपि स्वरूपशक्तेरनपायेन तदानीमपि व्याप्यताऽऽपत्तेरित्यर्थः । आधेयशक्तिस्तु छेदकाले विनष्टेति न तदानीं व्याप्तिरिति भावः ॥ ३५ ॥

ननु किं पञ्चशिखेन निजशक्त्युद्भवो व्याप्तिरेव नोच्यते, तर्हि धूमस्य वह्न्याधेयत्वाभावात् वह्न्यव्याप्यतापत्तिरिति ? तत्राह—

( व्याप्तिविषये पञ्चशिखमतनिरसनम् ।— )

## आधेयशक्तिसिद्धौ निजशक्तियोगः समानन्यायात् ॥ ३६ ॥

आधेयशक्तेर्व्याप्तित्वसिद्धौ निजशक्त्युद्भवोऽपि व्याप्तित्वेन सिद्ध एव,

समानन्यायात्,' युक्तिसाम्यादित्यर्थः। अननुगमस्तु नानार्थशब्दवन्न दोषाय। एवं स्वमतेऽपि नानाविधसञ्चारा एव व्याप्तयो बोध्याः। न चैवमप्यनुमितिहेतुत्वे व्याप्तीनामननुगमः स्यादिति वाच्यं, तृणा-रणिमण्यादिवत् कार्य्यगतवैजात्याद्युपपत्तेरिति। पञ्चावयवयोगात् सुखादिसिद्धिरिति यदुक्तं, तदुपपादनाय व्याप्तिनिर्वचनेनानुमानप्रामाण्ये बाधकमपास्तम्॥ ३६॥

इदानीं पञ्चावयवरूपशब्दस्य ज्ञानजनकत्वोपपत्तये शब्दशक्त्यादि-निर्वचनेन तदनुपपत्तिरूपं शब्दप्रामाण्ये परेषां बाधकमपास्यते—

(शब्दार्थयोः सम्बन्धनिर्देशः।—)

## वाच्य-वाचकभावः सम्बन्धः शब्दार्थयोः॥ ३७॥

अर्थे वाच्यताऽऽख्या शक्तिः, शब्दे वाचकताऽऽख्या शक्तिरस्ति, सैव तयोः सम्बन्धोऽनुयोगितावत्, तज्ज्ञानाच्छब्देनार्थोपस्थितिरित्यर्थः॥ ३७॥

शक्तिग्राहकान्याह—

(शब्दार्थयोः वाच्य-वाचकभावसम्बन्धसिद्धौ शक्तिग्राहकनिर्देशः।—)

## त्रिभिः सम्बन्धसिद्धिः॥ ३८॥

आप्तोपदेशः, वृद्धव्यवहारः, प्रसिद्धपदसामानाधिकरण्यम्, इत्येतै-स्त्रिभिरुक्तसम्बन्धो गृह्यते इत्यर्थः॥ ३८॥

(कार्य्यवत् वृद्धव्यवहारादेरपि शक्तिग्राहकत्वोक्तिः।—)

## न कार्य्ये नियम उभयथा दर्शनात्॥ ३९॥

स च शक्तिग्रहः कार्य्ये एव भवतीति नियमो नास्ति, लोके कार्य्य-वदकार्य्येऽपि वृद्धव्यवहारादिदर्शनादित्यर्थः। यथा हि गामानयेत्यादि-कार्य्यपरवाक्यात् वृद्धस्य गवानयनादिव्यवहारो दृश्यते, एवमेव पुत्रस्ते जात इत्यादिसिद्धपरवाक्यादपि पुलकादिव्यवहारो दृश्यते इति। सिद्धार्थ-शब्दप्रामाण्यसिद्धौ च विवेके वेदान्तप्रामाण्यं सिद्धमित्याशयः॥ ३९॥

ननु भवतु लोके सिद्धे शक्तिग्रहः, अर्थप्रत्ययादिदर्शनात्, वेदे तु कथं भविष्यति, अकार्य्यबोधनवैयर्थ्यादिति? तत्राह—

( लौकिकप्रयोगवत् वैदिकप्रयोगस्यापि शक्तिग्राहकत्वोक्तिः ।—)

**लोके व्युत्पन्नस्य वेदार्थप्रतीतिः ॥ ४० ॥**

लोके शब्दशक्तिव्युत्पन्नस्य पुरुषस्य तदनुसारेणैव वेदार्थप्रतीतिः ; न हि लोके शक्तिर्भिन्ना वेदे च भिन्ना, "य एव लौकिकास्त एव वैदिकाः" इति न्यायात् ; अतो लोके सिद्धार्थपरत्वसिद्धौ वेदेऽपि तत् सिध्यतीत्यर्थः ॥ ४० ॥

अत्र शङ्कते—

( वैदिकशब्दस्य शक्तिग्राहकत्वे शङ्कोत्थापनम् ।— )

**न त्रिभिरपौरुषेयत्वाद्वेदस्य तदर्थस्यापि अतीन्द्रियत्वात् ॥ ४१ ॥**

ननु त्रिभिराप्तोपदेशादिभिर्वेदशब्देन शक्तिग्रहः सम्भवति, वेदस्यापौरुषेयत्वेन तदर्थेष्वाप्तोपदेशासम्भवात् ; तथा वेदार्थस्यातीन्द्रियतया तत्र वृद्धव्यवहारस्य प्रसिद्धपदसामानाधिकरण्यस्य च ग्रहीतुमशक्यत्वादित्यर्थः ॥ ४१ ॥

तत्रातीन्द्रियार्थत्वमादौ निराकरोति—

( वेदार्थस्य अतीन्द्रियत्वनिराकरणम् ।— )

**न यज्ञादेः स्वरूपतो धर्मत्वं वैशिष्ट्यात् ॥ ४२ ॥**

यदुक्तं तन्न, यतो देवनोद्देश्यकद्रव्यत्यागादिरूपस्य यज्ञ-दानादेः स्वरूपत एव धर्मत्वं वेदविहितत्वं, वैशिष्ट्यात् प्रकृष्टफलकत्वात् । यज्ञादिकं चेष्टादिरूपत्वान्नातीन्द्रियं, न तु यज्ञादिविषयकापूर्वस्य धर्मत्वं, येन वेदविहितस्यातीन्द्रियता स्यादित्यर्थः । ननु तथाऽपि देवताद्यतीन्द्रियार्थघटितत्वमस्ति ? इति चेन्न, अतीन्द्रियेष्वपि पदार्थताऽवच्छेदकेन सामान्यरूपेण प्रतीतेर्व्यवसायात्वादिति ॥ ४२ ॥

यच्चोक्तमपौरुषेयत्वेनाप्तोपदेशाभाव इति, तदपि निराकरोति—

( अपौरुषेयत्वेन वेदार्थस्य आप्तोपदेशत्वाभावोक्तिनिराकरणम् ।— )

**निजशक्तिर्व्युत्पत्त्या व्यवच्छिद्यते ॥ ४३ ॥**

अपौरुषेयत्वेऽपि वेदानां स्वाभाविकी या अर्थेषु शक्तिरस्ति, सैवाप्तैर्वृद्ध-

परम्पराभिर्व्युत्पत्त्या अस्य शब्दस्यायमर्थ इत्येवंरूपया व्यवच्छिद्यते शिष्येभ्योऽर्थान्तराद्व्यावर्त्त्योपदिश्यते, न त्वाधुनिकशब्दवत् स्वयं सङ्केत्यते, येन पौरुषेयत्वापत्तिः स्यादित्यर्थः ॥ ४३ ॥

ननु तथाऽप्यतीन्द्रियदेवताफलादिषु कथं शक्तिग्रहो वैदिकपदानां स्यात् ? तत्राह—

( अतीन्द्रियविषयेषु वैदिकपदानां शक्तिग्रहप्रकारकथनम् ।— )

## योग्यायोग्येषु प्रतीतिजनकत्वात् तत्सिद्धिः ॥ ४४ ॥

प्रत्यक्षाप्रत्यक्षेषु पदार्थेषु सामान्यधर्मपुरस्कारेण तत्सिद्धिः शक्तिग्रहो भवति, साधारण्येन पदानां प्रतीतिजनकत्वस्यानुभवसिद्धत्वात् । विशेषस्त्वतीन्द्रियोऽपूर्व एव वाक्यार्थः, न च तस्य ग्रहणं प्रागपेक्ष्येत इत्यर्थः ॥४४ ॥

शब्दप्रामाण्यप्रसङ्गेनैव शब्दगतं विशेषमवधारयति—

( वेदानां नित्यत्वाभावोक्तिः ।— )

## न नित्यत्वं वेदानां कार्य्यत्वश्रुतेः ॥ ४५ ॥

"स तपोऽतप्यत, तस्मात् तपस्तेपानात् त्रयो वेदा अजायन्त" ( बृह० उ० १।२।६ ) इत्यादिश्रुतेर्वेदानां न नित्यत्वमित्यर्थः । वेदनित्यतावाक्यानि च सजातीयानुपूर्वीप्रवाहानुच्छेदपराणि ॥ ४५ ॥

तर्हि किं पौरुषेया वेदाः ? नेत्याह—

( वेदानामपौरुषेयत्वोक्तिः ।— )

## न पौरुषेयत्वं तत्कर्त्तुः पुरुषस्याभावात् ॥ ४६ ॥

ईश्वरप्रतिषेधादिति शेषः । सुगमम् ॥ ४६ ॥

अपरः कर्त्ता भवतु ? इत्याकाङ्क्षायामाह—

( वेदानामपौरुषेयत्वे युक्त्यन्तरम् ।— )

## न मुक्तामुक्तयोरयोग्यत्वात् ॥ ४७ ॥

जीवन्मुक्तधुरीणो विष्ण्वादिः शुद्धसत्त्वतया निरतिशयसर्वज्ञोऽपि वीतरागत्वात् सहस्रशाखवेदनिर्माणायोग्यः । अमुक्तस्त्वसर्वज्ञत्वादेव अयोग्य इत्यर्थः ॥ ४७ ॥

नन्वेवमपौरुषेयत्वान्नित्यत्वमेवागतम् ? तत्राह—

( वेदानामपौरुषेयत्वेऽपि नित्यताखण्डनम् ।— )

**नापौरुषेयत्वान्नित्यत्वमङ्कुरादिवत् ॥ ४८ ॥**

स्पष्टम् ॥ ४८ ॥

नन्वङ्कुरादिष्वपि कार्य्यत्वेन घटादिवत् पौरुषेयत्वमनुमेयम् ? तत्राह—

( अङ्कुरादीनामपौरुषेयत्वोक्तिः ।— )

**तेषामपि तद्योगे दृष्टबाधादिप्रसक्तिः ॥ ४९ ॥**

यत् पौरुषेयं तच्छरीरजन्यमिति व्याप्तिर्लोके दृष्टा, तस्या बाधादिरेवं सति स्यादित्यर्थः ॥ ४९ ॥

नन्वादिपुरुषोच्चरितत्वाद्वेदा अपि पौरुषेया एव ? इत्याह—

( वेदानां पौरुषेयत्वे खण्डनान्तरम् ।— )

**यस्मिन्नदृष्टेऽपि कृतबुद्धिरुपजायते तत् पौरुषेयम् ॥ ५० ॥**

दृष्ट इवादृष्टेऽपि यस्मिन् वस्तुनि कृतबुद्धिर्बुद्धिपूर्वकत्वबुद्धिर्जायते, तदेव पौरुषेयमिति व्यवह्रियते इत्यर्थः । एतदुक्तं भवति—न पुरुषोच्चरिततामात्रेण पौरुषेयत्वं, श्वास-प्रश्वासयोः सुषुप्तिकालीनयोः पौरुषेयत्वव्यवहाराभावात्, किन्तु बुद्धिपूर्वकत्वेन ; वेदास्तु निःश्वासवदेवादृष्टवशादबुद्धिपूर्वका एव स्वयम्भुवः सकाशात् स्वयं भवन्ति ; अतो न ते पौरुषेयाः । तथा च श्रुतिः,—"तस्यैतस्य महतो भूतस्य निःश्वसितमेतत् यदृग्वेदः" ( बृह० उ० २।४।१० ) इत्यादिरिति ॥ ५० ॥

नन्वेवं यथार्थवाक्यार्थज्ञानापूर्वकत्वाच्छुकवाक्यस्येव वेदानामपि प्रामाण्यं न स्यात् ? तत्राह—

( वेदानां स्वतः प्रामाण्यस्थापनम् ।— )

**निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम् ॥ ५१ ॥**

वेदानां निजा स्वाभाविकी या यथार्थज्ञानजननशक्तिस्तस्या मन्त्रायुर्वेदादावभिव्यक्तेरुपलम्भादखिलवेदानामेव स्वत एव प्रामाण्यं सिध्यति, न

वक्तृयथार्थज्ञानमूलकत्वादिनेत्यर्थः। तथा च न्यायसूत्रं—"मन्त्रायुर्वेद-प्रामाण्यवच्च तत्प्रामाण्यम्" (२।१।६८) इति। गुणादीनाञ्च नात्यन्तबाध इति प्रतिज्ञायां न्यायेन सुखादिसिद्धेरित्येको हेतुरुपन्यस्तः,प्रपञ्चितश्च ॥५१॥

साम्प्रतं तस्यामेव हेत्वन्तरमाह—

(असतः ख्यातिनिराकरणम्।—)

## नासतः ख्यानं नृशृङ्गवत् ॥ ५२ ॥

आस्तां तावत् पञ्चावयवेन सुखादिसिद्धिः, ज्ञानमात्रादपि तत्सिद्धिः; अत्यन्तासत्त्वे सुखादीनां ज्ञानमेव नोपपद्यते, नरशृङ्गादीना-मभानादित्यर्थः। तथा च ब्रह्मसूत्रं—"नाभाव उपलब्धेः" (२।२।२८) इति। शुक्तिरजत-स्वप्नमनोरथादौ च मनःपरिणामरूप एवार्थः प्रतीयते; "नात्यन्तासन्" इति वक्ष्यति ॥ ५२ ॥

नन्वेवं गुणादिरत्यन्तं सन्नेव भवतु, तथा च नात्यन्तबाध इत्यन्तपद-वैयर्थ्यमिति? तत्राह—

(सतः ख्यातिखण्डनम्।—)

## न सतो बाधदर्शनात् ॥ ५३ ॥

अत्यन्तसतोऽपि गुणादेर्भानं न युक्तं, विनाशादिकाले बाधदर्श-नात्, चैतन्ये भासमानस्य जगतश्चैतन्ये एव बाधदर्शनाच्च; "अथात आदेशो नेति नेति" (वृह० उ० २।४।६) "नेह नानाऽस्ति किञ्चन" (वृह० उ० ४।४।१९) "यत्र देवा न देवा माता न माता" (ब्रह्म० २) इत्यादिश्रुतिभिर्न्यायैश्चेत्यर्थः ॥ ५३ ॥

नन्वेवमपि सदसद्भ्यां भिन्नमेव जगद्भवतु, तथाऽप्यत्यन्तबाधप्रतिषेधोप-पत्तिरिति? तत्राह—

(सदसदतिरिक्तस्य अनिर्वचनीयस्य ख्यातिखण्डनम्।—)

## नानिर्वचनीयस्य तदभावात् ॥ ५४ ॥

सत्त्वेनासत्त्वेन चानिर्वचनीयं तादृशस्यापि भानं न घटते, तदभावात् सदसद्भिन्नवस्तुप्रसिद्धेरित्यर्थः, दृष्टानुसारेणैव कल्पनायाः औचित्यादिति भावः ॥ ५४ ॥

नन्वेवं किमन्यथाख्यातिरेवेष्टा ? नेत्याह—

( अन्यथाख्यातिखण्डनम् ।— )

## नान्यथाख्यातिः स्ववचोव्याघातात् ॥ ५५ ॥

अन्यद्वस्तु अन्यरूपेण भासते, इत्यपि न युक्तं, स्ववचोव्याघातात्; अन्यत्रान्यरूपस्य नृशृङ्गतुल्यत्वमन्यथाशब्देनोच्यते, अन्यथा च तस्य भानमुच्यते इति स्ववच एव व्याहतम्, असतो भानासम्भवस्यान्यथाख्यातिवादिभिरपि वचनादित्यर्थः। पुरोवर्त्तिन्यसत्त्वे, अन्यत्र तत्सत्ताया भानाप्रयोजकत्वमिति भावः। न च सर्वत्रासतो भाने सामग्री न सम्भवति, सन्निकर्षाद्यभावादित्यतः क्वचित् सत्तामात्रमपेक्ष्यते इति वाच्यम्, अनादिवासनाधाराया एव भ्रमहेतुत्वसम्भवादिति ॥ ५५ ॥

नात्यन्तबाध इति पूर्वोक्तं विवृण्वानः स्वसिद्धान्तमुपसंहरति—

( सदसत्ख्यातिविषये स्वमतप्रदर्शनम् ।— )

## सदसत्ख्यातिर्बाधाबाधात् ॥ ५६ ॥

सदसत्ख्यातिरेव सर्वेषां गुणादीनां; कुतः ? बाधाबाधात्, तत्र स्वरूपेणाबाधः, सर्ववस्तूनां नित्यत्वात्; संसर्गतस्तु बाधः सर्ववस्तूनां चैतन्येऽस्ति, यथा पटादिषु लौहित्यादेः, तद्वत्। तथा अवस्थाभिरपि बाधोऽखिलपरिणामिनां कालादिष्वित्यर्थः। बाधश्च प्रतिपन्नधर्मिणि निषेधबुद्धिविषयत्वम्; असत्त्वञ्चाभावः, सोऽप्यधिकरणस्वरूप इति। न च सदसत्त्वयोर्विरोध इति वाच्यं, प्रकारभेदेनाविरोधात्। यथा हि, लौहित्यं बिम्बरूपेण सत्, स्फटिकगतप्रतिबिम्बरूपेण चासदिति दृष्टम्; यथा वा रजतं वणिग्वीथीस्थरूपेण सत्, शुक्त्यध्यस्तरूपेण चासत्, तथैव सर्वं जगत् स्वरूपतः सत्, चैतन्याद्यावध्यस्तरूपेण चासदिति। तदुक्तम्—

"अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्त्तते।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा॥"

इति। एवमेवावस्थाभेदेनापि सदसत्त्वमविरुद्धम्; यथा हि वृक्षादिः प्ररूढाद्यवस्थाभिः सन्नपि अङ्कुराद्यवस्थाभिरसन् भवति, तथैव प्रधानादिकं सदसदात्मकमिति। तदुक्तम्—

"अव्यक्तं कारणं यत् तन्नित्यं सदसदात्मकम् ।
प्रधानं प्रकृतिश्चेति यदाहुस्तत्त्वचिन्तकाः ॥"

इति। एतच्चास्माभिर्ब्रह्ममीमांसाभाष्ये योगवार्त्तिके च प्रपञ्चितमिति दिक् ॥ ५६ ॥

अयं विचारः पर्य्याप्तः, इदानीं शब्दविचारः प्रसङ्गागत आगन्तुकतया अन्ते प्रस्तूयते—

( शब्दानां स्फोटात्मकत्वखण्डनम् ।— )

## प्रतीत्यप्रतीतिभ्यां न स्फोटात्मकः शब्दः ॥५७॥

प्रत्येकवर्णेभ्योऽतिरिक्तं कलश इत्यादिरूपमखण्डमेकपदं स्फोट इति योगैरभ्युपगम्यते, कम्बुग्रीवाद्यवयवेभ्योऽतिरिक्तो घटाद्यवयवीव ; स च शब्दविशेषः पदाख्योऽर्थस्फुटीकरणात् स्फोट इत्युच्यते। स शब्दोऽप्रामाणिकः ; कुतः ? प्रतीत्यप्रतीतिभ्याम्। स शब्दः किं प्रतीयते ? न वा ? आद्ये येन वर्णसमुदायेनानुपूर्वीविशेषविशिष्टेन सोऽभिव्यज्यते, तस्यैवार्थप्रत्यायकत्वमस्तु, किमन्तर्गडुना तेन ? अन्त्ये त्वज्ञातस्फोटस्य नास्त्यर्थप्रत्यायनशक्तिरिति व्यर्था स्फोटकल्पनेत्यर्थः ॥ ५७ ॥

पूर्वं वेदानां नित्यत्वं प्रतिषिद्धम्, इदानीं वर्णनित्यत्वमपि प्रतिषेधति—

( शब्दनित्यताखण्डनम् ।— )

## न शब्दनित्यत्वं कार्य्यताप्रतीतेः ॥ ५८ ॥

स एवायं ग-कार इत्यादिप्रत्यभिज्ञाबलाद्वर्णनित्यत्वं न युक्तम्, उत्पन्नो ग-कार इत्यादिप्रत्ययेनानित्यत्वसिद्धेरित्यर्थः। प्रत्यभिज्ञा च तज्जातीयताविषयिणी, अन्यथा घटादेरपि प्रत्यभिज्ञया नित्यतापत्तेरिति ॥ ५८ ॥

शङ्कते—

( शब्दानित्यतायां शङ्कोत्थापनम् ।— )

## पूर्वसिद्धसत्त्वस्याभिव्यक्तिर्दीपेनेव घटस्य ॥५९॥

ननु पूर्वसिद्धसत्ताकस्यैव शब्दस्य ध्वन्यादिभिर्या अभिव्यक्तिः, तन्मात्रमुत्पत्तिः प्रतीतेर्विषयः। अभिव्यक्तौ दृष्टान्तः, दीपेनेव घटस्येति ॥ ५९ ॥

परिहरति—

( शब्दानित्यतायाम् उत्थापितशङ्कापरिहारः ।— )

## सत्कार्य्यसिद्धान्तश्चेत् सिद्धसाधनम् ॥ ६० ॥

अभिव्यक्तिर्यद्यनागतावस्थात्यागेन वर्त्तमानावस्थालाभ इत्युच्यते, तदा सत्कार्य्यसिद्धान्तः । तादृशनित्यत्वं च सर्वकार्य्याणामेवेति सिद्धसाधनमित्यर्थः । यदि च वर्त्तमानतया सत एव ज्ञानमात्ररूपिणी अभिव्यक्तिरुच्यते, तदा घटादीनामपि नित्यताऽऽपत्तिः, कारणव्यापारेण ज्ञानस्यैवोत्पत्तिप्रतीतिविषयत्वौचित्यादिति भावः ॥ ६० ॥

आत्माद्वैते पूर्वानुक्तमपि बाधकमुपन्यसनीयमित्येतदर्थमात्माद्वैतनिरासः पुनरारभ्यते—

( आत्मनः अद्वैतत्वनिरसने युक्तिप्रदर्शनम् ।— )

## नाद्वैतमात्मनो लिङ्गात् तद्भेदप्रतीतेः ॥ ६१ ॥

यद्यप्यात्मनामन्योऽन्यं भेदवाक्यवदभेदवाक्यान्यपि सन्ति, तथाऽपि नाद्वैतं नात्यन्तमभेदः । अजादिवाक्यस्थैः प्रकृतित्यागात्यागादिलिङ्गैर्भेदस्यैव सिद्धेरित्यर्थः । न ह्यत्यन्ताभेदे तानि लिङ्गान्युपपद्यन्ते, अभेदवाक्यानि तु साम्यादिश्रुत्येकवाक्यतया वैधर्म्यादिलक्षणाभेदपरतयोपपद्यन्ते, अभिमानादिनिवृत्त्यन्यथाऽनुपपत्त्याऽपि तत्परत्वावधारणाच्चेति ॥ ६१ ॥

आत्मनामभेदे लिङ्गं बाधकमुक्तम्, "आत्मैवेदं सर्वं" (छान्दो० ७।२५।२) "ब्रह्मैवेदं सर्वम्" ( नृसिंहोत्तर० ७ ) इति श्रुत्या आत्मनोऽनात्मभिरद्वैते तु प्रत्यक्षमपि बाधकमस्तीत्याह—

( आत्मनः अद्वैतत्वनिरसने प्रत्यक्षप्रमाणप्रदर्शनम् ।— )

## नानात्मनाऽपि प्रत्यक्षबाधात् ॥ ६२ ॥

अनात्मनाऽपि भोग्यप्रपञ्चेनात्मनो नाद्वैतं, प्रत्यक्षेणापि बाधात् । आत्मनः सर्वभोग्याभेदे घट-पटयोरप्यभेदः स्यात्, घटादेः पटाद्यभिन्नात्माभेदात्, स च भेदग्राहकप्रत्यक्षबाधित इत्यर्थः ॥ ६२ ॥

शिष्यबुद्धिवैशद्याय प्रासङ्गमप्यर्थं विशदयति—

( आत्मनः अद्वैतत्वनिरसनवाक्यस्य विशदीकरणम् ।— )

## नोभाभ्यां तेनैव ॥ ६३ ॥

उभाभ्यां समुच्चिताभ्यामप्यात्मानात्मभ्यां नात्यन्ताभेदः, तेनैव हेतुद्वयेनेत्यर्थः ॥ ६३ ॥

नन्वेवम् "आत्मैवेदम्" इत्यादिश्रुतीनां का गतिरिति ? तत्राह—

( आत्मनः अद्वैतत्वप्रतिपादकश्रुतिवाक्यानां समाधानम् ।— )

## अन्यपरत्वमविवेकानां तत्र ॥ ६४ ॥

अविवेकानामविवेकिपुरुषान् प्रति तत्राद्वैतेऽन्यपरत्वमुपासनाऽर्थकानुवाद इत्यर्थः । लोके हि शरीर-शरीरिणोर्भोग्य भोक्त्रोश्चाविवेकेनाभेदो व्यवह्रियते—'अहं गौरः' 'ममात्मा भद्रसेनः' इत्यादिः ; अतस्तमेव व्यवहारमनूद्य तानेव प्रति तथोपासनं श्रुतिर्विदधाति सत्त्वशुद्ध्याद्यर्थमिति । अत एव परमार्थदशायामुपास्यानामात्मत्वं प्रतिषेधति श्रुतिः,—

"यन्मनसा न मनुते येनाहुर्मनो मतम् ।

तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥" ( केन० ५ )

इत्यादिनेति ॥ ६४ ॥

एकात्मवादिनां जगदुपादानकारणमपि न सम्भवतीत्याह—

( एकात्मवादखण्डने युक्तिप्रदर्शनम् ।— )

## नात्माऽविद्या नोभयं जगदुपादानकारणं निःसङ्गत्वात् ॥ ६५ ॥

केवल आत्मा, आत्माश्रिता वा अविद्या, समुच्चितं वा कपालद्वयवदुभयं न जगदुपादानं सम्भवति, आत्मनोऽसङ्गत्वात् । सङ्गाख्यो हि यः संयोगविशेषः, तेनैव द्रव्याणां विकारो भवति ; अतोऽसङ्गत्वात् केवलस्यात्मनोऽद्वितीयस्य नोपादानत्वं, नाविद्याद्वाराऽपि सम्भवति, असङ्गत्वेनाविद्यायोगस्य प्रागेव निरस्तत्वात्, प्रत्येकोपादानत्ववदेवोभयोपादानत्वमप्यसङ्गत्वादेवासम्भवीत्यर्थः । यदि चाविद्या द्रव्यरूपा पुरुषाश्रिता गगने वायुवदिष्यते, तदा आत्माद्वैतहानिः ; तथा प्रकृतिरेव सेति सिद्धसाधनं च, तादृशं चाविभागेनाद्वैतमस्माकमपोष्टमेव, "सदेव सौम्येदमग्र आसीत्" "एकमेवाद्वितीयं ब्रह्म" ( छान्दो० ६।२।१ ) इत्यादि-

श्रुत्याऽपि चाविभागरूपमेवाद्वैतं प्रतिपाद्यते। "न तु तद्द्वितीयमस्ति, ततोऽन्यद्विभक्तं यत् पश्येत्" ( बृह० उ० ४।३।२३ ) इति श्रुत्यन्तरात्। तथा चोक्तम्—

"आसीज्ज्ञानमयोऽप्यर्थ एकमेवाविकल्पितम्।
तयोरेकतरो ह्यर्थः प्रकृतिश्चोभयात्मिका॥
ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते॥"

इति। अविकल्पितमविभक्तम्। तस्माद्वेदान्तिनामखण्डात्माद्वैतं नार्थः, तथाऽप्याधुनिका वेदान्तिनोऽस्मत्पूर्वपक्षजातमेव ब्रह्ममीमांसासिद्धान्ततया कल्पयन्ति। तत् तु ब्रह्मसूत्रानुक्तत्वेन प्रत्युत तद्विरोधेन चास्माभिस्तत्रैव निराकृतमिति। अत्र च ब्रह्ममीमांसासिद्धान्तो न दूष्यते, अपि तु वेदान्तेष्वापाततः सम्भावितोऽर्थ एव निराक्रियते इति मन्तव्यम्। एवमुत्तरसूत्रेष्वपि॥ ६५॥

प्रकाशस्वरूप आत्मेति स्वयं सिद्धान्तितं, तत्र "सत्यं विज्ञानमानन्दं ब्रह्म" ( बृह० उ० ३।८।२८ ) इति श्रुतेरानन्दोऽप्यात्मनः स्वरूपमिति पूर्वपक्षं निराकरोति—

( आत्मनः आनन्दमयत्वोक्तिनिरसनम्।— )

**नैकस्यानन्द-चिद्रूपत्वे द्वयोर्भेदात्॥ ६६॥**

एकधर्मिण आनन्द-चैतन्योभयरूपत्वं न भवति, दुःखज्ञानकाले सुखाननुभवेन, सुख-ज्ञानयोर्भेदादित्यर्थः। न च ज्ञानविशेषः सुखमिति वक्तुं शक्यते, आत्मस्वरूपज्ञानस्याखण्डत्वात्; अत एव चैतन्यानुभवकाले सुखस्यावरणमपि वक्तुं न शक्यते, अखण्डत्वेनानन्दावरणे दुःखं जानामीत्यनुभवानुपपत्तेः। न ह्यात्मनोंऽशभेदोऽस्ति येनानन्दांशावरणेऽपि चैतन्यांशो भायादिति। न च श्रुतिबलेनैतेऽसत्तर्का इति वाच्यं, "नानन्दं न निरानन्दम्" इत्यादि श्रुत्या, "अदुःखमसुखं ब्रह्म भूत-भव्य-भवात्मकम्" इत्यादि स्मृत्या चानन्दाभावस्यापि प्रतिपादितत्वेन तर्कस्यैवात्रादर्त्तव्यत्वादिति॥ ६६॥

नन्वेवमानन्दरूपताश्रुतेः का गतिः? तत्राह—

( आत्मनः आनन्दरूपत्वश्रुतेः गौणार्थत्वोक्तिः ।— )

## दुःखनिवृत्तेर्गौणः ॥ ६७ ॥

दुःखनिवृत्त्या आत्मनि श्रौत आनन्दशब्दो गौण इत्यर्थः। तदुक्तं— "सुखं दुःखसुखात्ययः" इति। "न निरानन्दम्" इति श्रुतिस्त्वौपाधिकानन्दपरा, सत्यसङ्कल्पत्वादिश्रुतिवदिति। यत् तु निरुपाधिप्रियत्वेनात्मनः सुखरूपत्वानुमानं कश्चिदाह, तन्न; दुःखाभावरूपतयाऽपि प्रेमोपपत्तेः, सुखआदिवदात्मत्वस्यापि प्रेमप्रयोजकत्वाच्च; अन्यथा परसुखेऽपि प्रेमापत्तेरिति ॥ ६७ ॥

गौणप्रयोगे वीजमाह—

( आत्मनः आनन्दरूपत्वश्रुतेः गौणार्थत्वे हेतुप्रदर्शनम् ।— )

## विमुक्तिप्रशंसा मन्दानाम् ॥ ६८ ॥

मन्दानज्ञान् प्रति दुःखनिवृत्तिरूपामात्मस्वरूपमुक्तिं सुखत्वेन श्रुतिः स्तौति, प्ररोचनार्थमित्यर्थः ॥ ६८ ॥

अन्तःकरणोपपत्तेः पूर्वोक्ताया आञ्जस्येनोपपत्तये मनोवैभवपूर्वपक्षमपाकरोति—

( मनसो व्यापकत्वखण्डनम् ।— )

## न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा वास्यादिवत् चक्षुरादिवत् ॥ ६९ ॥

मनसोऽन्तःकरणसामान्यस्य न विभुत्वं, करणत्वात्, वास्यादिवत्। वा-शब्दो व्यवस्थितविकल्पे, इन्द्रियत्वादप्यन्तःकरणविशेषस्य तृतीयस्य न विभुत्वमित्यर्थः। देहव्यापि-ज्ञानादिकं तु मध्यमपरिमाणेनैवोपपद्यते इति ॥ ६९ ॥

अत्राप्रयोजकत्वशङ्कायामनुकूलतर्कमाह—

( मनसो व्यापकत्वखण्डने अनकूलयुक्तिप्रदर्शनम् ।— )

## सक्रियत्वात् गतिश्रुतेः ॥ ७० ॥

आत्मनो लोकान्तरगमनश्रवणेन तदुपाधिभूतस्यान्तःकरणस्य सक्रियत्वसिद्धेर्न विभुत्वं सम्भवतीत्यर्थः ॥ ७० ॥

कार्य्यत्वोपपत्तये मनसो निरवयवत्वमपि निराकरोति—

( मनसो निरवयवत्वखण्डनम् ।— )

## न निर्भागत्वं तद्योगात् घटवत् ॥ ७१ ॥

तच्छब्दः पूर्वसूत्रस्थेन्द्रियं परामृशति । मनसो न निरवयवत्वम्, अनेकेन्द्रियैष्वेकदा योगात्, किन्तु घटवन्मध्यमपरिमाणं सावयवं-मित्यर्थः । कारणावस्थं चान्तःकरणमणवेवेति बोध्यम् ॥ ७१ ॥

मनः-कालादीनां नित्यत्वं प्रतिषेधति—

( प्रकृति-पुरुषव्यतिरिक्तानां पदार्थानां नित्यत्वप्रतिषेधः ।— )

## प्रकृति-पुरुषयोरन्यत् सर्वमनित्यम् ॥ ७२ ॥

सुगमम् । कारणावस्थं चान्तःकरणाकाशादिकं प्रकृतिरेवोच्यते, न तु मन-आदिकं, व्यवसायाद्यसाधारणधर्माभावात् ॥ ७२ ॥

ननु—

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥" (श्वेताश्व०उ० ४।१०)

इत्यादिश्रुतिभिः पुम्प्रकृत्योरपि सावयवत्वादनित्यत्वमिति ? तत्राह—

( प्रकृति-पुरुषयोरनित्यताशङ्कानिरसनम् ।— )

## न भागलाभो भोगिनो निर्भागत्वश्रुतेः ॥ ७३ ॥

भोगिनः पुरुषस्य प्रधानस्य चावयवो न युज्यते, निरवयवत्वश्रुतेः,

"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्"

( श्वेताश्व० उ० ६।१९ ) इत्यादिनेत्यर्थः । उक्तश्रुतिश्चाकाश-जलयोरिव पिता-पुत्रचेतनयोरिव च विभागमात्रेणांशांशिभावं बोधयतीति ॥ ७३ ॥

दुःखनिवृत्तिर्मोक्ष इत्युक्तं, तदवधारणाय तत्र मोक्षे परेषां मतानि निराकरोति—

( आनन्दाभिव्यक्तिः मुक्तिरिति परमतनिरसनम् ।— )

## नानन्दाभिव्यक्तिर्मुक्तिर्निर्धर्मत्वात् ॥ ७४ ॥

आत्मन्यानन्दरूपोऽभिव्यक्तिरूपश्च धर्मो नास्ति, स्वरूपं च नित्यमेवेति न साधनसाध्यम्; अतो नानन्दाभिव्यक्तिर्मोक्ष इत्यर्थः ॥ ७४ ॥

( विशेषगुणोच्छेदो मुक्तिरिति परमतनिरसनम् ।— )

## न विशेषगुणोच्छित्तिस्तद्वत् ॥ ७५ ॥

अशेषविशेषगुणोच्छेदोऽपि न मुक्तिः, तद्वत् निर्धर्मत्वादेवेत्यर्थः । ननु तर्हि दुःखनिवृत्तिरेव कथं मोक्ष उक्तः, दुःखाभावस्यापि धर्मत्वात् ? इति चेत्, न; अस्माभिर्भोग्यतासम्बन्धेनैव दुःखाभावस्य पुरुषार्थतावचनादिति ॥ ७५ ॥

( ब्रह्मलोकगतिर्मुक्तिरिति परमतनिरसनम् ।— )

## न विशेषगतिर्निष्क्रियस्य ॥ ७६ ॥

ब्रह्मलोकगतिरपि न मोक्षः, आत्मनो निष्क्रियत्वेन गत्यभावात्; लिङ्गशरीराभ्युपगमे च न मोक्षो घटते इत्यर्थः ॥ ७६ ॥

( आकारोपरागोच्छेदो मुक्तिरिति नास्तिकमतनिरसनम् ।— )

## नाकारोपरागोच्छित्तिः क्षणिकत्वादिदोषात् ॥ ७७ ॥

क्षणिकज्ञानमेवात्मा, तस्य विषयाकारता बन्धः, तद्वासनाख्योपरागस्य नाशो मोक्ष इति यन्नास्तिकमतं, तदपि न, क्षणिकत्वादिदोषेण मोक्षस्यापुरुषार्थत्वादित्यर्थः ॥ ७७ ॥

नास्तिकस्यैव मुक्त्यन्तरं दूषयति—

( सर्वोच्छेदो मुक्तिरिति नास्तिकमतनिरसनम् ।— )

## न सर्वोच्छित्तिरपुरुषार्थत्वादिदोषात् ॥ ७८ ॥

ज्ञानरूपस्यात्मनः सामग्र्येणैवोच्छित्तिरपि न मोक्षः, आत्मनाशस्य लोके पुरुषार्थत्वादर्शनादिभ्य इत्यर्थः ॥ ७८ ॥

( अखिलप्रपञ्चनाशो मुक्तिरिति परमतनिरसनम् ।— )

## एवं शून्यमपि ॥ ७९ ॥

ज्ञाने ज्ञेयात्मकाखिलप्रपञ्चनाशोऽप्येवमात्मनाशेनापुरुषार्थत्वान्न मोक्ष इत्यर्थः ॥ ७९ ॥

( प्रकृष्टदेशाद्याधिपत्यं मुक्तिरिति परमतनिरसनम् ।— )

**संयोगाश्च वियोगान्ता इति न देशादिलाभोऽपि ॥ ८० ॥**

प्रकृष्टदेश-धनाङ्गनादिस्वाम्यमपि न मोक्षः, यतः,—
"संयोगाश्च वियोगान्ता मरणान्तं च जीवनम्"
इति श्रूयते इत्यर्थः ; तथा च, विनाशित्वात् स्वाम्यं न मुक्तिरिति ॥८०॥

( परमात्मनि लयो मुक्तिरिति परमतनिरसनम् ।— )

**न भागियोगो भागस्य ॥ ८१ ॥**

भागस्यांशस्य जीवस्य भागिनि अंशिनि परमात्मनि लयो न मोक्षः, संयोगा हि वियोगान्ता इत्युक्तहेतोः, ईश्वरानभ्युपगमाच्च, तथा स्वलयस्यापुरुषार्थत्वाच्चेत्यर्थः ॥ ८१ ॥

( अणिमाद्यैश्वर्य्यप्राप्तिः मुक्तिरिति परमतनिरसनम् ।— )

**नाणिमादियोगोऽप्यवश्यम्भावित्वात् तदुच्छित्तेरितरयोगवत् ॥ ८२ ॥**

अणिमाद्यैश्वर्य्यसम्बन्धोऽपि न मुक्तिः, ऐश्वर्य्यान्तरसम्बन्धवदेव तस्याप्युच्छेदनियमादित्यर्थः ॥ ८२ ॥

( इन्द्रादिपदलाभो मुक्तिरिति परमतनिरसनम् ।— )

**नेन्द्रादिपदयोगोऽपि तद्वत् ॥ ८३ ॥**

इन्द्राद्यैश्वर्य्यलाभोऽपि न मुक्तिः, इतरैश्वर्य्यवत् क्षयिष्णुत्वादित्यर्थः ॥८३॥
इन्द्रियाणामाहङ्कारिकत्वं यदुक्तं, तत्र परविप्रतिपत्तिं निराकरोति—

( इन्द्रियाणां भौतिकत्वमिति परमतनिरसनम् ।— )

**न भूतप्रकृतित्वमिन्द्रियाणामाहङ्कारिकत्व-श्रुतेः ॥ ८४ ॥**

सुगमा योजना । पूर्वं चैतत् व्याख्यातम् ॥ ८४ ॥

शक्त्यादिकमपि तत्त्वमस्तीत्याशयेन परेषां पदार्थप्रतिनियमं तन्मात्र-ज्ञानान्मुक्तिं च निराकरोति—

( पदार्थानां प्रतिनियतत्वं तज्ज्ञानान्मुक्तिश्चेति परमतनिरसनम् ।— )

## न षट्पदार्थनियमस्तद्बोधान्मुक्तिः ॥ ८५ ॥

द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाया एव पदार्था इति यत् वैशेषिकाणां नियमः, यश्च तज्ज्ञानान्मोक्ष इत्यभ्युपगमः, सोऽप्रामाणिकः, शक्त्याद्यतिरेकात्, पृथिव्यादिनवद्रव्येभ्यः प्रकृतेरतिरेकाच्चेत्यर्थः। गन्धादि-मत्त्वेनैव हि पृथिव्यादिव्यवहारः, गन्धादिश्च साम्यावस्थायां नास्ति; अतः पृथिवीत्वादिजातिरपि घटत्वादिवत् कार्य्यमात्रवृत्तिरिति। तदुक्तं—

"नाहो न रात्रिर्न नभो न भूमि-
र्नासीत् तमो ज्योतिरभून्न चान्यत्।
शब्दादिबुद्ध्याद्युपलभ्यमेकं
प्राधानिकं ब्रह्म पुमांस्तदाऽऽसीत् ॥"

इति ॥ ८५ ॥

( षोड़शादिपदार्थनियमस्तज्ज्ञानान्मुक्तिश्चेति न्यायादिमतखण्डनम् ।— )

## षोड़शादिष्वप्येवम् ॥ ८६ ॥

न्याय-पाशुपतादिमतेषु षोड़शादिष्वपि न नियमः, न वा तन्मात्र-ज्ञानान्मुक्तिः, उक्तरूपेण पदार्थाधिक्यादित्यर्थः। अस्मन्मते तु नित्यं पदार्थ-द्वयमेव, नित्यानित्यसाधारणास्तु पदार्थाः पञ्चविंशतिरेवेति नियमः; पञ्चविंशतिद्रव्येष्वेव गुण-कर्म-सामान्यशक्त्यादीनामन्तर्भाव इति ॥ ८६ ॥

पञ्चभूतानां पूर्वोक्तकार्य्यत्वोपपत्त्यर्थं वैशेषिकाद्यभ्युपगतं पार्थिवाद्यणु-नित्यत्वमपाकरोति—

( परमाणोर्नित्यतोक्तिखण्डनम् ।— )

## नाणुनित्यता तत्कार्य्यत्वश्रुतेः ॥ ८७ ॥

पृथिव्याद्यणूनां नित्यता नास्ति, तेषामणूनामपि कार्य्यत्वश्रुतेरित्यर्थः। यद्यप्यस्माभिः सा श्रुतिर्न दृश्यते काललुप्तत्वादिना, तथाऽप्याचार्य्यवाक्यात् मनुस्मरणाच्चानुमेया। यथा मनुः,—

"अणवो मात्रा विनाशिन्यो दशार्द्धानां च याः स्मृताः ।
ताभिः सार्द्धमिदं सर्वं सम्भवत्यनुपूर्वशः ॥" ( १।२७ )

इति । दशार्द्धानां पृथिव्यादिपञ्चभूतानाम् । न चात्र वाक्येऽणु-शब्देन द्व्यणुकाद्येव ग्राह्यमिति वाच्यं, सङ्कोचे प्रमाणाभावादिति । अत्राणुशब्दो भूतपरमाणुपर एव, वैशेषिकाद्यभिमतं च तस्य नित्यत्व-मनेन सूत्रेण निराक्रियते । न त्वणुपरिमाणद्रव्यसामान्यस्य नित्यत्वं, रजोगुणस्य चाञ्चल्यानुरोधेनाणुत्वसिद्धेः । मध्यमपरिमाणत्वे नित्यत्वस्य विभुत्वे च क्रियाया अनुपपत्तेरिति ॥ ८७ ॥

ननु निरवयवस्य परमाणोः कथं कार्य्यत्वं घटते ? तत्राह—

( परमाणोः सावयवत्वोक्तिः ।— )

## न निर्भागत्वं कार्य्यत्वात् ॥ ८८ ॥

श्रुतिसिद्धकार्य्यत्वान्यथाऽनुपपत्त्या पृथिव्याद्यणूनां न निरवयवत्व-मित्यर्थः । अत एव तन्मात्राख्यसूक्ष्मद्रव्याण्येव पार्थिवाद्यणूनामवयवा इति पातञ्जलभाष्ये व्यासदेवैः प्रतिपादितम् । पृथिवीपरमाणुर्जलपर-माणुरित्यादिव्यवहारस्तु पृथिव्यादीनामपकर्षकाष्ठाभिप्रायेणैव ; अतः प्रकृतिपर्य्यन्तमणुत्वेऽपि न क्षतिरिति । यद्यपि तन्मात्रेष्वपि गन्धाद्यस्ति, तथाऽपि तस्याप्रत्यक्षतया न पृथिवीत्वादिनियामकत्वं, व्यङ्ग्यगन्धादि-रेव पृथिवीत्वादिसिद्धेः ; अतो न तन्मात्राणि पृथिव्यादयः, तेषु च सूक्ष्मभूतव्यवहारो भूतसाक्षात्कारणत्वादिनैवेत्यपि बोध्यम् ॥ ८८ ॥

प्रकृति-पुरुषसाक्षात्कारो न सम्भवति, रूपस्य द्रव्यसाक्षात्कारहेतु-त्वादिति नास्तिकाक्षेपं निराकरोति—

( प्रकृति-पुरुषसाक्षात्कारस्य असम्भवत्वमिति नास्तिकमतखण्डनम् ।— )

## न रूपनिबन्धनात् प्रत्यक्षनियमः ॥ ८९ ॥

रूपादेव निमित्तात् प्रत्यक्षतेति नियमो नास्ति, धर्मादिनाऽपि साक्षात्कारसम्भवादित्यर्थः, व्यञ्जकानियमस्याञ्जनादौ दृष्टत्वेनादोषत्वात् ; अतो वह्निर्द्रव्यलौकिकप्रत्यक्षं प्रत्येवोद्भूतरूपं व्यञ्जकमिति भावः ॥ ८९ ॥

नन्वेवं किमणुपरिमाणं वस्त्वस्ति ? न वा ? इत्याकाङ्क्षायां परिमाण-निर्णयं करोति—

( परिमाणस्य द्वैविध्योक्तिः ।— )

**न परिमाणचातुर्विध्यं द्वाभ्यां तद्योगात् ॥ ९० ॥**

अणु, महत्, दीर्घं, ह्रस्वमिति परिमाणचातुर्विध्यं नास्ति, द्वैविध्यं तु वर्त्तते एव, द्वाभ्यां तद्योगात्, द्वाभ्यामेवाणु-महत्परिमाणाभ्यां चातुर्विध्यसम्भवादित्यर्थः । महत्परिमाणस्यावान्तरभेदावेव हि ह्रस्व-दीर्घौ, अन्यथा वक्रादिरूपैः परिमाणानन्त्यप्रसङ्गादिति । तत्रास्मन्नयेऽणुपरिमाणमाकाशस्य कारणं गुणविशेषं वर्जयित्वा भूतेन्द्रियाणां मूलकारणेषु सत्त्वादिगुणेषु मन्तव्यम् ; अन्यत्र यथायोग्यं मध्यमादि-परममहत्त्वान्तपरिमाणानि, तानि च महत्त्वस्यैवावान्तरभेदा इति ॥ ९० ॥

पुरुषैकत्वं सामान्येनेति कण्ठत एवोक्तं, प्रकृतेरेकत्वं सामान्येनेत्यर्थादुक्तं, तदर्थं सामान्येषु नास्तिकविप्रतिपत्तिं निराकरोति—

( सामान्यनिर्णये नास्तिकमतखण्डनम् ।— )

**अनित्यत्वेऽपि स्थिरतायोगात् प्रत्यभिज्ञानं सामान्यस्य ॥ ९१ ॥**

व्यक्तीनामनित्यत्वेऽपि स एवायं घट इति स्थिरतायोगेन यत् प्रत्यभिज्ञानं, तत् सामान्यस्य सामान्यविषयकमेव तत् प्रत्यभिज्ञानमित्यर्थः ॥ ९१ ॥

तस्मान्न सामान्यापलापो युक्त इत्याह—

( सामान्यापलापस्य अयुक्तत्वोक्तिः ।— )

**न तदपलापस्तस्मात् ॥ ९२ ॥**

सुगमम् ॥ ९२ ॥

नन्वतद्व्यावृत्तिरूपेणाभावेनैव प्रत्यभिज्ञोपपादनीया, सैव च सामान्यशब्दार्थोऽस्तु ? तत्राह—

( सामान्यशब्दस्य अर्थनिरूपणम् ।— )

**नान्यनिवृत्तिरूपत्वं भावप्रतीतेः ॥ ९३ ॥**

स एवायमिति भावप्रत्ययान्निवृत्तिरूपत्वं न सामान्यस्येत्यर्थः, अन्यथा हि नायमघट इत्येव प्रतीयेत । किञ्च, अन्यव्यावृत्तिशब्दस्याघट-

व्यावृत्तिरित्यर्थो वाच्यः ; तत्राघटत्वं घटसामान्यभिन्नत्वमिति सामान्याभ्युपगम एवापतित इति ॥ ९३ ॥

ननु सादृश्यनिबन्धना प्रत्यभिज्ञा भविष्यति ? तत्राह—

( सादृश्यस्य तत्त्वान्तरत्वखण्डनम् ।— )

## न तत्त्वान्तरं सादृश्यं प्रत्यक्षोपलब्धेः ॥ ९४ ॥

भूयोऽवयवादिसामान्यादतिरिक्तं न सादृश्यमस्ति, प्रत्यक्षत एव सामान्यरूपतयोपलम्भादित्यर्थः ॥ ९४ ॥

ननु स्वाभाविकी शक्तिरेव सादृश्यमस्तु, न तु तत् सामान्यम् ? इत्याशङ्कामपाकरोति—

( स्वाभाविकी शक्तिरेव सादृश्यमिति मतनिरसनम् ।— )

## निजशक्त्यभिव्यक्तिर्वा वैशिष्ट्यात् तदुपलब्धेः ॥ ९५ ॥

वस्तुनः स्वाभाविकशक्तिविशेषोत्पादोऽपि न सादृश्यं, शक्त्युपलब्धितः सादृश्योपलब्धेर्विलक्षणत्वात् । शक्तिज्ञानं हि नान्यधर्मिज्ञानसापेक्षं, सादृश्यज्ञानं पुनः प्रतियोगिज्ञानमपेक्षते, अभावज्ञानवदिति ज्ञानयोर्वैलक्षण्यमित्यर्थः । किञ्च,धर्मिणः शक्तिसामान्यं न सादृश्यं, बाल्यावस्थायामपि युवसादृश्यापत्तेः ; किन्तु युवादिकालीनः शक्तिविशेषो युवादिसादृश्यमिति वक्तव्यं, तथा च, प्रतिव्यक्त्यनन्तशक्तिकल्पनापेक्षया सर्वव्यक्तिसाधारणैकसामान्यकल्पनैव युक्तेति ॥ ९५ ॥

ननु तथाऽपि घटादिसंज्ञकत्वमेव घटादिव्यक्तीनां सादृश्यमस्तु ? तत्राह—

( संज्ञा-संज्ञिसम्बन्धस्य सादृश्यत्वोक्तिनिराकरणम् ।— )

## न संज्ञा-संज्ञिसम्बन्धोऽपि ॥ ९६ ॥

यथोक्तः संज्ञा-संज्ञिनोः सम्बन्धोऽपि न सादृश्यं, वैशिष्ट्यात् तदुपलब्धेरेवेत्यर्थः, संज्ञा-संज्ञिभावमजानतोऽपि सादृश्यज्ञानादिति ॥ ९६ ॥

अपि च—

( संज्ञा-संज्ञिसम्बन्धस्य सादृश्यत्वोक्तिखण्डने युक्त्यन्तरम् ।— )

## न सम्बन्धनित्यतोभयानित्यत्वात् ॥ ९७ ॥

संज्ञा-संज्ञिनोरनित्यत्वात् तत्सम्बन्धस्यापि न नित्यता ; अतः कथं तेन अतीतवस्तुसादृश्यं वर्त्तमानवस्तुनि स्यादित्यर्थः ॥ ९७ ॥

ननु सम्बन्ध्यनित्यत्वेऽपि सम्बन्धो नित्यः स्यात्, किमत्र बाधकम् ? तत्राह—

( सम्बन्धस्य अनित्यत्वोक्तिः ।— )

## नातः सम्बन्धो धर्मिग्राहकप्रमाणबाधात् ॥ ९८ ॥

कादाचित्कविभागे सत्येव सम्बन्धः सिध्यति, अन्यथा वक्ष्यमाण-रीत्या स्वरूपेणैवोपपत्तौ सम्बन्धकल्पनाऽनवकाशात्, स च कादाचित्को विभागो न सम्बन्धनित्यत्वे सम्भवति ; अतः सम्बन्धग्राहकप्रमाणेनैव बाधान्न नित्यः सम्बन्ध इत्यर्थः ॥ ९८ ॥

नन्वेवं नित्ययोर्गुण-गुणिनोर्नित्यः समवायो नोपपद्येत ? तत्राह—

( समवायाभावोक्तिः ।— )

## न समवायोऽस्ति प्रमाणाभावात् ॥ ९९ ॥

सुगमम् ॥ ९९ ॥

ननु वैशिष्ट्यप्रत्यक्षं विशिष्टबुद्ध्यन्यथाऽनुपपत्तिश्च प्रमाणम् ? तत्राह—

( समवायस्य भावत्वे प्रत्यक्षानुमानयोः प्रमाणत्वखण्डनम् ।— )

## उभयत्राप्यन्यथासिद्धेर्न प्रत्यक्षमनुमानं वा ॥१००॥

उभयत्रापि वैशिष्ट्यप्रत्यक्षे तदनुमाने च स्वरूपेणैवान्यथासिद्धेर्न तदुभयं समवाये प्रमाणमित्यर्थः । अयं भावः,—यथा समवायवैशिष्ट्यबुद्धिः समवायस्वरूपेणैवेष्यते,अनवस्थाभयादिति,तत्र प्रत्यक्षानुमाने अन्यथासिद्धे ; एवं गुण-गुणिप्रभृतीनां विशिष्टबुद्धिरपि गुणादिस्वरूपेणैवेष्यताम्, अतस्तत्रापि प्रत्यक्षानुमाने अन्यथासिद्धे इति। नन्वेवं संयोगोऽपि न सिध्यति, भूतलादौ घटादिप्रत्ययस्यापि स्वरूपेणैवान्यथासिद्धेरिति चेत् ? न,वियोगकालेऽपि भूतल-घटयोः स्वरूपतादवस्थ्येन विशिष्टबुद्धिप्रसङ्गात् । समवायस्थले च समवेतस्य कदाऽपि स्वाश्रयवियोगो नास्तीति नायं दोषः ।

कश्चित् तु तादात्म्यसम्बन्धेनात्र समवायस्यान्यथासिद्धिमाह, तन्न ; शब्द-मात्रभेदात् । तादात्म्यं ह्यत्र नात्यन्तं वक्तव्यं, गुणवियोगेऽपि गुणि-सत्त्वात्, वैशिष्ट्यप्रत्ययाच्च ; किन्तु भेदाभेदबुद्धिनियामकः सम्बन्ध-विशेष एव अगत्या वक्तव्यः ; तथा च, तस्य समवाय इति वा तादात्म्य-मिति वा नाममात्रं भिन्नं, सम्बन्धिद्वयातिरिक्तः सम्बन्धस्तु सिद्ध एवेति । यदि च तादात्म्यं स्वरूपमेवोच्यते, तदाऽस्माभिरपि तदेवोक्तमिति शब्दमात्रे भेद इति ॥ १०० ॥

प्रकृतेः क्षोभात् प्रकृति-पुरुषसंयोगः, तस्मात् सृष्टिरिति सिद्धान्तः ; तत्रायं नास्तिकानामाक्षेपः,—नास्ति क्षोभाख्या कस्यापि क्रिया, सर्वं वस्तु क्षणिकं, यत्रोत्पद्यते तत्रैव विनश्यतीत्यतो न देशान्तरसंयोगोन्नेया क्रिया सिध्यतीति ? तत्राह—

( क्रियाया अनुमानेन सिद्धौ नास्तिकमतखण्डनम् ।— )

## नानुमेयत्वमेव क्रियाया नेदिष्ठस्य तत्तद्वतो-रेवापरोक्षप्रतीतेः ॥ १०१ ॥

न देशान्तरसंयोगादिना क्रियाया अनुमेयत्वमेव, यतो नेदिष्ठस्य निकटस्थस्य द्रष्टुः क्रिया-क्रियावतोः प्रत्यक्षेणापि प्रतीतिरस्ति, वृक्षश्चल-तीत्यादिरित्यर्थः ॥ १०१ ॥

द्वितीयाध्याये शरीरस्य पाञ्चभौतिकत्वादिरूपैर्मतभेदा एवोक्ताः, न तु विशेषोऽवधृतः, अत्रापरपक्षं प्रतिषेधति—

( शरीरस्य पाञ्चभौतिकत्वमतनिरसनम् ।— )

## न पाञ्चभौतिकं शरीरं बहूनामुपादाना-योगात् ॥ १०२ ॥

बहूनां भिन्नजातीयानां चोपादानत्वं घट-पटादिस्थले न दृष्टमिति सजातीयमेवोपादानम्, इतरच्च भूतचतुष्टयमुपष्टम्भकमित्याशयेन पाञ्च-भौतिकव्यवहारः । एकोपादानकत्वेऽपि पृथिव्येवोपादानं सर्वशरीर-स्येति वक्ष्यति ॥ १०२ ॥

स्थूलमेव शरीरमिति केचित्, तन्निराकरोति—

( स्थूलमेव शरीरमिति मतनिरसनम्।— )

## न स्थूलमिति नियम आतिवाहिकस्यापि विद्यमानत्वात् ॥ १०३ ॥

इन्द्रियाश्रयत्वं शरीरत्वं—

"यन्मूर्त्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयन्ति षट्।
तस्माच्छरीरमित्याहुस्तस्य मूर्त्तिं मनीषिणः॥" ( १।१७ )

इति मनुवाक्यात्। एतादृशं च शरीरं स्थूलं प्रत्यक्षमेवेति न नियमः। कुतः? आतिवाहिकस्याप्रत्यक्षतया सूक्ष्मस्य भौतिकस्य शरीरान्तरस्यापि सत्त्वादित्यर्थः। लोकाल्लोकान्तरं लिङ्गदेहमतिवाहयतीत्यातिवाहिकं, भूताश्रयतां विना चित्रादिवत् गमनाभावस्य प्रागेवोक्तत्वात्। इदं च सूत्रं तस्यैव स्पष्टीकरणमात्रार्थम्। लिङ्गस्य च शरीरत्वं भोगाश्रयतया पुरुषप्रतिविम्बाश्रयतया वेति बोध्यम्। आतिवाहिकशरीरे च प्रमाणम्—

"अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः"
( कठ० ६।१७ )

"अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलात् यमः"

इति श्रुति-स्मृती। न हि लिङ्गशरीरस्य सकलशरीरव्यापिनः स्वतोऽङ्गुष्ठमात्रत्वं सम्भवति, अत आधारस्याङ्गुष्ठमात्रत्वमर्थात् सिध्यति; यथा दीपस्य सर्वगृहव्यापित्वेऽपि कलिकाकारत्वं, तैलवर्त्त्यादिसूक्ष्मांशस्य दशोपरि सम्पिण्डितस्य पार्थिवभागस्य कलिकाकारतया, तथैव लिङ्गदेहस्य देहव्यापित्वेऽप्यङ्गुष्ठपरिमाणत्वं सूक्ष्मभूतस्याङ्गुष्ठपरिमाणत्वेनानुमेयमिति ॥ १०३ ॥

गोलकेभ्योऽतिरिक्तानीन्द्रियाणि प्रागुक्तानि, तदुपपादनायेन्द्रियाणाम- प्राप्तप्रकाशकत्वं निराकरोति—

( इन्द्रियाणामप्राप्तप्रकाशकत्वनिरसनम्।— )

## नाप्राप्तप्रकाशकत्वमिन्द्रियाणामप्राप्तेः सर्वप्राप्तेर्वा ॥ १०४ ॥

असम्बद्धार्थानीन्द्रियाणि न प्रकाशयन्ति, अप्राप्तेः; प्रदीपादीनां

सप्राप्तप्रकाशकत्वादर्शनात्, अप्राप्तप्रकाशकत्वे व्यवहितादिसर्ववस्तु-प्रकाशकत्वप्रसङ्गाच्चेत्यर्थः ; अतो दूरस्थसूर्य्यादिसम्बन्धार्थं गोलकातिरिक्तमिन्द्रियमिति भावः । करणानां चार्थप्रकाशकत्वं पुरुषेऽर्थसमर्पणद्वारैव, स्वतो जड़त्वात्, दर्पणस्य मुखप्रकाशकत्ववत् । अथवा अर्थप्रतिबिम्बोद्ग्रहणमेवार्थप्रकाशकत्वमिति ॥ १०४ ॥

नन्वेवं चक्षुषस्तैजसत्वमेव युक्तं, तैजस एव किरणरूपेणाशु दूरापसर्पणदर्शनात्? इति शङ्कां निराकरोति—

( चक्षुषस्तैजसत्वनिरसनम् ।— )

**न तेजोऽपसर्पणात् तैजसं चक्षुर्वृत्तितस्तत्सिद्धेः ॥ १०५ ॥**

तेजसोऽपसर्पणं दृष्टमिति कृत्वा तैजसं चक्षुर्न वाच्यम् । कुतः? अतैजसत्वेऽपि प्राणवदेव वृत्तिभेदेनापसर्पणोपपत्तेरित्यर्थः । यथा हि प्राणः शरीरमसन्त्यज्यैव नासाग्राद्बहिः कियद्दूरं प्राणनाख्यवृत्त्या अपसरति, एवमेवातैजसद्रव्यमपि चक्षुर्देहमसन्त्यज्यापि वृत्त्याख्यपरिणामविशेषेण झटित्येव दूरस्थं सूर्य्यादिकं प्रत्यपसरेदिति ॥ १०५ ॥

नन्वेवम्भूतवृत्तौ किं प्रमाणम्? तत्राह—

( वृत्तिसिद्धौ प्रमाणप्रदर्शनम् ।— )

**प्राप्तार्थप्रकाशलिङ्गात् वृत्तिसिद्धिः ॥ १०६ ॥**

सुगमम् ॥ १०६ ॥

देहमपरित्यज्यापि गमनोपपत्तये वृत्तेः स्वरूपं दर्शयति—

( वृत्तेः स्वरूपप्रदर्शनम् ।—)

**भाग-गुणाभ्यां तत्त्वान्तरं वृत्तिः सम्बन्धार्थं सर्पतीति ॥ १०७ ॥**

सम्बन्धार्थं सर्पतीति हेतोश्चक्षुरादेर्भागो विस्फुलिङ्गवत् विभक्तांशो रूपादिवत् गुणश्च न वृत्तिः, किन्तु तदेकदेशभूता भाग-गुणाभ्यां भिन्ना वृत्तिः । विभागे हि सति तद्द्वारा चक्षुषः सूर्य्यादिसम्बन्धो न घटते,

गुणत्वे च सर्पणाख्यक्रियाऽनुपपत्तेरित्यर्थः। एतेन बुद्धिवृत्तिरपि प्रदीप-शिखावत् द्रव्यरूप एव परिणामः, स्वच्छतया अर्थाकारतोद्ग्राही, निर्मल-वस्त्रवदिति सिद्धम् ॥ १०७ ॥

नन्वेवं वृत्तीनां द्रव्यत्वे कथमिच्छादिरूपबुद्धिगुणेषु वृत्तिव्यवहारः? तत्राह—

( वृत्तेर्नियमेन द्रव्यत्वनिरसनम्।— )

## न द्रव्ये नियमस्तद्योगात् ॥ १०८ ॥

वृत्तिर्द्रव्यमेवेति नियमो नास्ति; कुतः? तद्योगात्, तत्र वृत्तौ योगा[illegible]त्। "वृत्तिर्वर्त्तन-जीवने" इति हि यौगिकोऽयं शब्दः, जीवनं च स्[illegible]तिहेतुर्व्यापारः, "जीव बल-प्राणधारणयोः" इत्यनुशासनात्, वैश्य[illegible]ः शूद्रवृत्तिरित्यादिव्यवहाराच्च। तत्र यथा द्रव्यरूपया वृत्त्या बुद्धि[illegible]वति, तथे[illegible]दिभिरपीति तेऽपि वृत्तयः, सर्वनिरोधेनैव चित्त-मरणादित्यर्थः ॥ १०८ ॥

इन्द्रियाणां भौतिकत्वस्यापि श्रवणात् कदाचिल्लोकविशेषभेदेन श्रुति-व्यवस्था शङ्क्येत? तत्राह—

( देशविशेषेऽपि इन्द्रियाणां भौतिकत्वनिरसनम्।— )

## न देशभेदेऽप्यन्योपादानता अस्मदादि-वन्नियमः ॥ १०९॥

न ब्रह्मलोकादिदेशभेदतोऽपीन्द्रियाणामहङ्कारातिरिक्तोपादानकत्वं, किन्त्वस्मदादीनां भूर्लोकस्थानामिव सर्वेषामेवाहङ्कारिकत्वनियमः, देश-भेदेनैकस्यैव लिङ्गशरीरस्य सञ्चारमात्रश्रवणादित्यर्थः ॥ १०९ ॥

नन्वेवं भौतिकत्वश्रुतिः कथमुपपद्यताम्? तत्राह—

( इन्द्रियाणां भौतिकत्ववादे हेतुप्रदर्शनम्।— )

## निमित्तव्यपदेशात् तद्व्यपदेशः ॥ ११० ॥

निमित्तेऽपि प्राधान्यविवक्षयोपादानत्वव्यपदेशो भवति, यथा इन्धनादग्निरिति; अतो भूतोपादानत्वव्यपदेश इत्यर्थः। तेज आदि-भूतोपष्टम्भेनैव हि तदनुगताहङ्काराच्चक्षुरादीन्द्रियाणि सम्भवन्ति, यथा

पार्थिवोपष्टम्भेन तदनुगतात् तैजसोऽग्निर्भवतीति । "अन्नमयं हि सोम्य ! मनः" (छान्दो० ६।५।४) इत्यादिश्रुतिः, तदुक्तयुक्तिश्चात्र प्रमाणम् ॥ ११० ॥

स्थूलशरीरगतं विशेषं प्रसङ्गादवधारयति—

( स्थूलशरीरगतविशेषावधारणम् ।— )

## ऊष्मजाण्डज-जरायुजोद्भिज्ज-साङ्कल्पिक-सांसिद्धिकं चेति न नियमः ॥ १११ ॥

"तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति, अण्डजं, जीवजम्, उद्भिज्जम्" ( छान्दो० ६।३।१ ) इति श्रुतावण्डजादिरूपं शरीरत्रैविध्यं प्रायिकाभिप्रायेणोक्तं, न तु नियमः; यत ऊष्मजादि-षड्विधमेव शरीरं भवतीत्यर्थः । तत्रोष्मजा दन्दशूकादयः । अण्डजाः पक्षि-सर्पादयः । जरायुजा मनुष्यादयः । उद्भिज्जा वृक्षादयः । सङ्कल्पजाः सनकादयः । सांसिद्धिका मन्त्र-तप-आदिसिद्धिजाः, यथा रक्तवीज-शरीरोत्पन्नशरीरादय इति ॥ १११ ॥

शरीरस्यैकमात्रभूतोपादानकत्वं पूर्वोक्तमनेनैव प्रसङ्गेन विशिष्याह—

( शरीरस्य एकभौतिकमात्रत्वव्यवस्थापनम् ।— )

## सर्वेषु पृथिव्युपादानमसाधारण्यात् तद्व्यपदेशः पूर्ववत् ॥ ११२ ॥

सर्वेषु शरीरेषु पृथिव्येवोपादानम्, असाधारण्यात् आधिक्यादिभि-रुत्कर्षात् । अत्रापि शरीरे पञ्च-चतुरादिभौतिकत्वव्यपदेशः पूर्ववत्, इन्द्रियाणां भौतिकत्ववदुपष्टम्भकत्वमात्रेणेत्यर्थः ॥ ११२ ॥

ननु प्राणस्य शरीरे प्राधान्यात् प्राण एव देहारम्भकोऽस्तु ? तत्राह—

( प्राणस्य देहारम्भकत्वनिरसनम् ।— )

## न देहारम्भकस्य प्राणत्वमिन्द्रियशक्तित-स्तत्सिद्धेः ॥ ११३ ॥

प्राणो न देहारम्भकः, इन्द्रियं विना प्राणानवस्थानेनान्वयव्यति-रेकाभ्यामिन्द्रियाणां शक्तिविशेषादेव प्राणसिद्धेः प्राणोत्पत्तेरित्यर्थः । अयं

भावः,—करणवृत्तिरूपप्राणः करणवियोगे न तिष्ठति, अतो मृतदेहे करणाभावेन प्राणाभावान्न प्राणो देहारम्भक इति ॥ ११३ ॥

नन्वेवं प्राणस्य देहाकारणत्वे प्राणं विनाऽपि देह उत्पद्येत ? तत्राह—

( देहोत्पत्तौ प्राणस्य निमित्तकारणत्वनिर्देशः ।— )

## भोक्तुरधिष्ठानाद्भोगायतननिर्माणमन्यथा पूतिभावप्रसङ्गात् ॥ ११४ ॥

भोक्तुः प्राणिनोऽधिष्ठानात् व्यापारादेव भोगायतनस्य शरीरस्य निर्माणं भवति, अन्यथा प्राणव्यापाराभावे शुक्र-शोणितयोः पूतिभावप्रसङ्गात्, मृतदेहवदित्यर्थः। तथा च, रससञ्चारादिव्यापारविशेषैः प्राणो देहस्य निमित्तकारणं, धारकत्वादिति भावः ॥ ११४ ॥

ननु प्राणस्यैवाधिष्ठानत्वं सम्भवति व्यापारवत्त्वात्, न प्राणिनः, कूटस्थत्वात्, निर्व्यापारस्याधिष्ठाने प्रयोजनाभावाच्चेति ? तत्राह—

( देहनिर्माणे प्राणस्य अधिष्ठातृत्वकथनम् ।— )

## भृत्यद्वारा स्वाम्यधिष्ठितिर्नैकान्तात् ॥ ११५ ॥

देहनिर्माणे व्यापाररूपमधिष्ठानं स्वामिनश्चेतनस्यैकान्तात् साक्षान्नास्ति, किन्तु प्राणरूपभृत्यद्वारा; यथा राज्ञः पुरनिर्माणे इत्यर्थः। तथा च, प्राणस्याधिष्ठातृत्वं साक्षात्, पुरुषस्याधिष्ठातृत्वं प्राणसंयोगमात्रेणेति सिद्धम्। कुलालादीनां घटादिनिर्माणेष्वप्येवम्। विशेषस्त्वयं—तत्र चेतनस्य बुद्ध्यादेश्चाप्युपयोगोऽस्ति, बुद्धिपूर्वकसृष्टित्वादिति। यद्यपि प्राणाधिष्ठानादेव देहनिर्माणं, तथाऽपि प्राणद्वारा प्राणिसंयोगोऽप्यपेक्ष्यते, पुरुषार्थमेव प्राणेन देहनिर्माणादित्याशयेन भोक्तुरधिष्ठानादित्युक्तम्॥११५॥

विमुक्तमोक्षार्थं प्रधानस्येत्युक्तं प्राक्, तत्र कथमात्मा नित्यमुक्तः, बन्धदर्शनात् ? इति परेषामाक्षेपे नित्यमुक्तिमुपपादयितुमाह—

( आत्मनो नित्यमुक्तत्वोपपादनम् ।— )

## समाधि-सुषुप्ति-मोक्षेषु ब्रह्मरूपता ॥ ११६ ॥

समाधिरसम्प्रज्ञातावस्था, सुषुप्तिश्चात्र समग्रसुषुप्तिः, मोक्षश्च विदेहकैवल्यम्, आसु अवस्थासु पुरुषाणां ब्रह्मरूपता बुद्धिवृत्तिविलयत-

सदौपाधिकपरिच्छेदविगमेन स्वस्वरूपपूर्णतयाऽवस्थानं, यथा घटध्वंसे घटाकाशस्य पूर्णतेत्यर्थः। तदेतदुक्तं "तन्निवृत्तावुपशान्तोपरागः स्वस्थः" (२।३४)इति। तथा च ब्रह्मत्वमेव पुरुषाणां स्वभावः,नैमित्तिकत्वाभावात्, स्फटिकस्य शौक्ल्यमिव। बुद्धिवृत्तिसम्बन्धकाले तु परिच्छिन्न-चिद्रूपत्वेनाभिव्यक्त्या परिच्छेदाभिमानः, तथा वृत्तिप्रतिबिम्बवशाद्दुःखादिमालिन्यमिव च भवतीति तत् सर्वमौपाधिकमेव, उपाध्याख्यनिमित्तान्वयव्यतिरेकानुविधानात् स्फटिकलौहित्यवदिति भावः। तथा च योगसूत्रं— "वृत्तिसारूप्यमितरत्र" ( समा० पा० ४ ) इति। अस्मच्छास्त्रे च ब्रह्मशब्द औपाधिकपरिच्छेदमालिन्यादिरहितपरिपूर्णचेतनसामान्यवाची, न तु ब्रह्ममीमांसायामिवैश्वर्य्योपलक्षितपुरुषमात्रवाचीति विवेक्तव्यम्। अत्रैते श्लोकाः शिष्यव्युत्पत्त्यर्थमुच्यन्ते।

> चिदाकाशेऽनभिव्यक्ते नानाकारैरितस्ततः।
> धीरटन्ती सह व्यक्त्या चिदटन्तीं प्रदर्शयेत्॥
> वस्तुतस्तु सदा पूर्णमेकरूपं च चिन्नभः।
> वृत्तिशून्यप्रदेशेषु दृश्याभावान्न पश्यति॥
> चक्षुषो रूपवत् पुंसो दृश्या वृत्तिर्हि नेतरत्।
> समाध्यादौ च सा नास्तीत्यतः पूर्णः पुमांस्तदा॥ ११६॥

तर्हि कः सुषुप्ति समाधिभ्यां मोक्षस्य विशेषः? तत्राह—

( सुषुप्ति-समाधिभ्यां मोक्षस्य विशेषनिरूपणम्।— )

## द्वयोः सबीजमन्यत्र तद्धतिः॥ ॥ ११७॥

द्वयोः समाधि सुषुप्त्योः सबीजं बन्धबीजसहितं ब्रह्मत्वम्, अन्यत्र मोक्षे बीजस्याभाव इति विशेष इत्यर्थः। ननु चेत् समाध्यादौ बन्धबीजमस्ति, तर्हि तेनैव परिच्छेदात् कथं ब्रह्मत्वमिति चेत्? न, बन्धबीजस्य कर्मादेस्तदानीमुपाधावेवावस्थानात्, न तु चेतनेषु पुरुषे च तेषामप्रतिबिम्बनादिति। जाग्रदाद्यवस्थायां तु बुद्धिवृत्तिप्रतिबिम्बवशादौपाधिको बन्ध इत्यरुक्तदावेदितम्। ननु पातञ्जले तद्भाष्ये चासम्प्रज्ञातयोगो निर्बीज उक्तः, अत्र कथं सबीज उच्यते इति चेत्? न,

असम्प्रज्ञाते क्रमेण बीजक्षयो भवतीत्याशयेनैव तत्र निर्बीजत्ववचनात्, अन्यथा सर्वासामेवासम्प्रज्ञातव्यक्तीनां निर्बीजत्वे व्युत्थानानुपपत्ते-रिति ॥ ११७ ॥

ननु समाधि-सुषुप्ती दृष्टे स्तः, मोक्षे तु किं प्रमाणम् ? इति नास्तिका-क्षेपं परिहरति—

( मोक्षे प्रमाणाभाव इति नास्तिकमतनिरसनम् ।— )

## द्वयोरिव त्रयस्यापि दृष्टत्वान्न तु द्वौ ॥ ११८ ॥

समाधि-सुषुप्तिदृष्टान्तेन मोक्षस्यापि दृष्टत्वादनुमितत्वान्न तु द्वौ सुषुप्ति-समाधी एव, किन्तु मोक्षोऽप्यस्तीत्यर्थः । अनुमानं चेत्थं—सुषुप्त्यादौ यो ब्रह्मभावः, तत्त्यागश्चितागजात् रागादिदोषवशादेव भवति, स चेद्दोषो ज्ञानेन नाशितः, तर्हि सुषुप्त्यादिसदृशस्यैवावस्था स्थिरा भवति, सैव मोक्ष इति ॥ ११८ ॥

ननु वासनाख्यबीजसत्त्वेऽपि वैराग्यादिना वासनाकौण्ठ्यादर्थाकारा वृत्तिः समाधौ मा भवतु, सुषुप्ते तु वासनाप्राबल्यादर्थज्ञानं भविष्यत्येवेति न सुषुप्तौ ब्रह्मरूपता युक्तेति ? तत्राह—

( सुषुप्तौ ब्रह्मरूपतायाः युक्तत्वप्रदर्शनम् ।— )

## वासनया न स्वार्थख्यापनं दोषयोगेऽपि न निमित्तस्य प्रधानबाधकत्वम् ॥ ११९ ॥

यथा वैराग्ये तथा निद्रादोषयोगेऽपि सति वासनया न स्वार्थ-ख्यापनं स्वविषयस्मारणं भवति, यतो न निमित्तस्य गुणीभूतस्य संस्कारस्य बलवत्तरनिद्रादोषबाधकत्वं सम्भवतीत्यर्थः, बलवत्तर एव हि दोषो वासनां दुर्बलां स्वकार्य्यकुण्ठां करोतीति भावः ॥ ११९ ॥

संस्कारलेशतो जीवन्मुक्तस्य शरीरधारणमिति तृतीयाध्याये प्रोक्तम् । तत्रायमाक्षेपः,—जीवन्मुक्तस्य शब्दादेकस्मिन्नप्यर्थेऽस्मदादीनामिव भोगो दृश्यते, सोऽनुपपन्नः,प्रथमं भोगमुत्पाद्यैव पूर्वसंस्कारनाशात् संस्कारान्तरस्य च ज्ञानप्रतिबन्धेन कर्मवदनुदयादिति ? तत्राह—

( एकस्यैव संस्कारस्य क्रियासम्पादकत्वकथनम् ।— )

**एकः संस्कारः क्रियानिर्वर्त्तको न तु प्रतिक्रियं संस्कारभेदा बहुकल्पनाप्रसक्तेः ॥ १२० ॥**

येन संस्कारेण देवादिशरीरभोग आरब्ध, स एक एव संस्कारस्तच्छरीरसाध्यस्य प्रारब्धभोगस्य समापकः ; स च कर्मवदेव भोगसमाप्तिनाश्यः, न तु प्रतिक्रियं प्रतिभोगव्यक्तिसंस्कारनानात्वं, बहुव्यक्तिकल्पनागौरवप्रसङ्गादित्यर्थः । कुलालचक्रभ्रमणस्थलेऽप्येवं वेगाख्यः संस्कार एक एव भ्रमणसमाप्तिपर्य्यन्तस्थायी बोध्यः ॥ १२० ॥

उद्भिज्जं शरीरमस्तीत्युक्तं, तत्र वाह्यबुद्ध्यभावाच्छरीरत्वं नास्तीति नास्तिकाक्षेपमपाकरोति—

( उद्भिज्जानां शरीरत्वाभाव इति नास्तिकमतखण्डनम् ।— )

**न वाह्यबुद्धिनियमः ॥ १२१ ॥**

**वृक्ष-गुल्म-लतौषधि-वनस्पति-तृण-वीरुधादीनामपि भोक्तृ-भोगायतनत्वं पूर्ववत् ॥ १२२ ॥**

न वाह्यज्ञानं यत्रास्ति तदेव शरीरमिति नियमः, किन्तु वृक्षादीनामन्तःसंज्ञानामपि भोक्तृ-भोगायतनत्वं शरीरत्वं मन्तव्यं, यतः पूर्ववत् पूर्वोक्तो यो भोक्त्रधिष्ठानं विना मनुष्यादिशरीरस्य पूतिभावः, तद्वदेव वृक्षादिशरीरेष्वपि शुष्कतादिकमित्यर्थः । तथा च श्रुतिः,—"अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति" ( छान्दो० ६।११।२ ) इत्यादिरिति । "न वाह्यबुद्धिनियमः" इत्यंशस्य पृथक्सूत्रत्वेऽपि सूत्रद्वयमेकीकृत्येत्थमेव व्याख्येयम् । सूत्रभेदस्तु दैर्घ्यभयादिति बोध्यम् ॥ १२१।१२२ ॥

( उद्भिज्जानां शरीरत्वभावे स्मृतिमतप्रदर्शनम् ।— )

**स्मृतेश्च ॥ १२३ ॥**

"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः पक्षि-मृगतां मानसैरन्त्यजातिताम् ॥" (१२।९ मनु०)

इत्यादिस्मृतेरपि वृक्षादिषु भोक्तृ-भोगायतनत्वमित्यर्थः ॥ १२३ ॥

ननु वृक्षादिष्वप्येवं चेतनत्वेन धर्माधर्मोत्पत्तिप्रसङ्गः ? तत्राह—

( देहयोगमात्रेण कर्माधिकारित्वाभावोक्तिः ।— )

## न देहमात्रतः कर्माधिकारित्वं वैशिष्ट्यश्रुतेः ॥ १२४ ॥

न देहमात्रेण धर्माधर्मोत्पत्तियोग्यत्वं जीवस्य । कुतः ? वैशिष्ट्यश्रुतेः ब्राह्मणादिदेहविशिष्टत्वेनैवाधिकारश्रवणादित्यर्थः ॥ १२४ ॥

देहभेदेनैव कर्माधिकारं दर्शयन् देहत्रैविध्यमाह—

( देहस्य त्रिविधत्वप्रदर्शनम् ।— )

## त्रिधा त्रयाणां व्यवस्था कर्मदेहोपभोग-देहोभयदेहाः ॥ १२५ ॥

त्रयाणामुत्तमाधम-मध्यमानां सर्वप्राणिनां त्रिप्रकारो देहविभागः, कर्मदेह-भोगदेहोभयदेहा इतीत्यर्थः । तत्र कर्मदेहः परमर्षीणां, भोगदेह इन्द्रादीनाम्, उभयदेहश्च राजर्षीणामिति । अत्र प्राधान्येन त्रिधा विभागः, अन्यथा सर्वस्यैव भोगदेहत्वापत्तेः ॥ १२५ ॥

चतुर्थमपि शरीरमाह—

( त्रिविधातिरिक्तदेहोक्तिः ।— )

## न किञ्चिदप्यनुशयिनः ॥ १२६ ॥

"विद्यादनुशयं द्वेष्यं पश्चात्तापानुतापयोः" इतिवाक्यादनुशयो वैराग्यम् । विरक्तानां शरीरमेतत्त्रयविलक्षणमित्यर्थः । यथा दत्तात्रेय-जड़भरतादीनामिति ॥ १२६ ॥

उक्तस्येश्वराभावस्य स्थापनाय पराभ्युपगतं ज्ञानेच्छाकृत्यादिनित्यत्वं प्रतिषेधति—

( ज्ञानेच्छादीनां नित्यत्वमतखण्डनम् ।— )

## न बुद्ध्यादिनित्यत्वमाश्रयविशेषेऽपि वह्निवत् ॥ १२७ ॥

बुद्धिरत्राध्यवसायाख्या वृत्तिः ; तथा च, ज्ञानेच्छाकृत्यादीनामाश्रय-विशेषे परेरीश्वरोपाधितयाऽभ्युपगतेऽपि नित्यत्वं नास्ति, अस्मदादिबुद्धि-

दृष्टान्तेन सर्वेषामेव बुद्धीच्छादीनामनित्यत्वानुमानात्, यथा लौकिक-वह्निदृष्टान्तेनावरणतेजसोऽप्यनित्यत्वानुमानमित्यर्थः ॥ १२७ ॥

आस्तां तावत् ज्ञानेच्छादेर्नित्यत्वं, तदाश्रय ईश्वरोपाधिरेवासिद्धः, ईश्वरस्यासिद्धेरित्यत आह—

( ज्ञानेच्छादीनां नित्यत्वमतखण्डने हेत्वन्तरप्रदर्शनम् ।— )

**आश्रयासिद्धेश्च ॥ १२८ ॥**

सुगमम् ॥ १२८ ॥

नन्वेवं ब्रह्माण्डादिसर्जनसमर्थं सर्वज्ञत्वादिकं कथं जन्यं सम्भाव्येतापि, लोके तप-आदिभिरेवमैश्वर्यादर्शनादिति ? तत्राह—

( ईश्वराभावेऽपि योगशक्त्या सृष्टिकर्तृत्वसम्भवोक्तिः ।— )

**योगसिद्धयोऽप्यौषधादिसिद्धिवन्नापलपनीयाः ॥१२९॥**

औषधादिसिद्धिदृष्टान्तेन योगजा अप्यणिमादिसिद्धयः सृष्ट्याद्युपयोगिन्यः सिध्यन्तीत्यर्थः ॥ १२९ ॥

पुरुषसिद्धिप्रतिकूलतया भूतचैतन्यवादित्वं प्रत्याचष्टे—

( भूतचैतन्यवादखण्डनम् ।— )

**न भूतचैतन्यं प्रत्येकादृष्टेः सांहत्येऽपि च सांहत्येऽपि च ॥ १३० ॥**

संहतभावावस्थायामपि पञ्चभूतेषु चैतन्यं नास्ति, विभागकाले प्रत्येकं चैतन्यादृष्टेरित्यर्थः। तृतीयाध्याये चेदं स्वसिद्धान्तविषयोक्तम्, अत्र च परमतनिराकरणायेति न पौनरुक्त्यं दोषायेति। वीप्साऽध्यायसमाप्तौ ॥ १३० ॥

स्वसिद्धान्तविरुद्धार्थभाषिणो ये कुवादिनः।<br>पञ्चमे तान् निराकृत्य स्वसिद्धान्तो दृढीकृतः॥

इति श्रीविज्ञानभिक्षुनिर्मिते कापिलसाङ्ख्यप्रवचनस्य भाष्ये परपक्षनिर्जयाध्यायः पञ्चमः ॥ ५ ॥

# षष्ठोऽध्यायः ।

अध्यायचतुष्केण समस्तशास्त्रार्थं प्रतिज्ञाय पञ्चमाध्याये परपक्षनिराकरणेन प्रसाध्येदानीं तमेव सारभूतशास्त्रार्थं षष्ठाध्यायेन सङ्क्षिप्योपसंहरति । उक्तार्थानां हि पुनस्तन्त्राख्ये विस्तरे कृते शिष्याणामसन्दिग्धाविपर्य्यस्तो दृढ़तरो बोध उत्पद्यते इत्यतः स्थूणानिखननन्यायादनुक्तयुक्त्याद्युपन्यासाच्च नात्र पौनरुक्त्यं दोषाय ।

( आत्मनः अस्तित्वकथनम् ।— )

## अस्त्यात्मा नास्तित्वसाधनाभावात् ॥ १ ॥

जानामीत्येवं प्रतीयमानतया पुरुषः सामान्यतः सिद्ध एवास्ति, बाधकप्रमाणाभावात् ; अतस्तद्विवेकमात्रं कर्त्तव्यमित्यर्थः ॥ १ ॥

तत्र विवेके प्रमाणद्वयमाह सूत्राभ्याम्—

( आत्मनो देहादिव्यतिरिक्तत्वप्रदर्शनम् ।— )

## देहादिव्यतिरिक्तोऽसौ वैचित्र्यात् ॥ २ ॥

असावात्मा द्रष्टा देहादि-प्रकृत्यन्तेभ्योऽत्यन्तं भिन्नः, वैचित्र्यात् परिणामित्वापरिणामित्वादिवैधर्म्यादित्यर्थः । प्रकृत्यादयस्तावत् प्रत्यक्षानुमानागमैः परिणामितयैव सिद्धाः, पुरुषस्यापरिणामित्वं तु सदा ज्ञातविषयत्वादनुमीयते ; तथाहि, यथा चक्षुषो रूपमेव विषयः, न सन्निकर्षसाम्येऽपि रसादिः, एवं पुरुषस्य स्वबुद्धिवृत्तिरेव विषयः, न तु सन्निकर्षसाम्येऽप्यन्यद्वस्त्विति फलबलात् कृप्तम् ; बुद्धिवृत्त्यारूढ़तयैव त्वन्यद्भोग्यं भवति पुरुषस्य, न स्वतः, सर्वदा सर्वभानापत्तेः । ताश्च बुद्धिवृत्तयो नाज्ञातास्तिष्ठन्ति, ज्ञानेच्छासुखादीनामज्ञातसत्तास्वीकारे, तेष्वपि घटादाविव संशयादिप्रसङ्गात् अहं जानामि न वा सुखी न वेत्यादिरूपेण ; अतस्तेषां सदा ज्ञातत्वात् तद्द्रष्टा चेतनोऽपरिणामीत्यायातम् ; चेतनस्य परिणामित्वे कदाचिदाम्यपरिणामेन सत्या अपि बुद्धिवृत्तेरदर्शनेन संशयाद्यापत्तेरिति । एवं पारार्थ्यापारार्थ्यादिकमपि पूर्वोक्तं वैधर्म्यजातं बोध्यम् ॥ २ ॥

( आत्मनो देहादिव्यतिरिक्तत्वे प्रमाणान्तरम् ।— )

## षष्ठीव्यपदेशादपि ॥ ३ ॥

ममेदं शरीरं, ममेयं बुद्धिरित्यादेर्विदुषां षष्ठीव्यपदेशादपि देहादिभ्य आत्मा भिन्नः, अत्यन्ताभेदे षष्ठ्यनुपपत्तेरित्यर्थः । तदुक्तं विष्णुपुराणे—

"त्वं किमेतच्छिरः किन्तु शिरस्तव तथोदरम् ।
किमु पादादिकं त्वं वै तवैतद्धि महीपते ! ॥
समस्तावयवेभ्यस्त्वं पृथग्भूय व्यवस्थितः ।
कोऽहमित्यत्र निपुणो भूत्वा चिन्तय पार्थिव ! ॥"

इति । न च स्थूलोऽहमित्यादिरपि विरुद्धव्यपदेशोऽस्तीति वाच्यं, श्रुत्या बाधिततया, 'ममात्मा भद्रसेन' इतिवत् गौणत्वेनैव तदुपपत्तेरिति ॥ ३ ॥

ननु "पुरुषस्य चैतन्यं" "राहोः शिरः" "शिलापुत्रस्य शरीरम्" इत्यादिव्यपदेशवदयमपि भवतु ? तत्राह—

( आत्मनो देहादित्वस्थापने उत्थापिताशङ्काखण्डनम् ।— )

## न शिलापुत्रवद्धर्मिग्राहकमानबाधात् ॥ ४ ॥

"शिलापुत्रस्य शरीरम्" इत्यादिवदयं षष्ठीव्यपदेशो न भवति, शिलापुत्रादिस्थले धर्मिग्राहकप्रमाणेन बाधाद्विकल्पमात्रम् । "मम शरीरम्" इति व्यपदेशे तु प्रमाणबाधो नास्ति,देहात्मताया एव बाधादित्यर्थः । यस्तु शास्त्रेषु मम-कारप्रतिषेधः, स स्वाम्यस्यानित्यतया वाचारम्भणमात्रत्वेनासत्यतापर एवेति भावः । "पुरुषस्य चैतन्यम्" इत्यत्राप्यस्ति धर्मिग्राहकमानबाधः, अनवस्थाभयेन लाघवाच्च देहादिव्यतिरिक्ततयाऽऽत्मसिद्धौ चैतन्यस्वरूपताऽवगाहनादिति ॥ ४ ॥

देहादिव्यतिरिक्ततया पुरुषमवधार्य्य तन्मुक्तिमवधारयति—

( आत्यन्तिकदुःखनिवृत्तेः पुरुषार्थत्वप्रदर्शनम् ।— )

## अत्यन्तदुःखनिवृत्त्या कृतकृत्यता ॥ ५ ॥

सुगमम् ॥ ५ ॥

# षष्ठोऽध्यायः ।

अध्यायचतुष्केण समस्तशास्त्रार्थं प्रतिज्ञाय पञ्चमाध्याये परपक्षनिरा-करणेन प्रसाध्येदानीं तमेव सारभूतशास्त्रार्थं षष्ठाध्यायेन सङ्क्षेपतः-संहरति । उक्तार्थानां हि पुनस्तन्त्राख्ये विस्तरे कृते शिष्याणामसन्दिग्धा-विपर्य्यस्तो दृढतरो बोध उत्पद्यते इत्यतः स्थूणानिखननन्यायादनुक्तयुक्त्या-द्युपन्यासाच्च नात्र पौनरुक्त्यं दोषाय ।

( आत्मनः अस्तित्वकथनम् ।— )

## अस्त्यात्मा नास्तित्वसाधनाभावात् ॥ १ ॥

जानामीत्येवं प्रतीयमानतया पुरुषः सामान्यतः सिद्ध एवास्ति, बाधक-प्रमाणाभावात् ; अतस्तद्विवेकमात्रं कर्त्तव्यमित्यर्थः ॥ १ ॥

तत्र विवेके प्रमाणद्वयमाह सूत्राभ्याम्—

( आत्मनो देहादिव्यतिरिक्तत्वप्रदर्शनम् ।— )

## देहादिव्यतिरिक्तोऽसौ वैचित्र्यात् ॥ २ ॥

असावात्मा द्रष्टा देहादि-प्रकृत्यन्तेभ्योऽत्यन्तं भिन्नः, वैचित्र्यात् परिणामित्वापरिणामित्वादिवैधर्म्यादित्यर्थः । प्रकृत्यादयस्तावत् प्रत्यक्षानु-मानागमैः परिणामितयैव सिद्धाः, पुरुषस्यापरिणामित्वं तु सदा ज्ञात-विषयत्वादनुमीयते ; तथाहि, यथा चक्षुषो रूपमेव विषयः, न सन्नि-कर्षसाम्येऽपि रसादिः, एवं पुरुषस्य स्वबुद्धिवृत्तिरेव विषयः, न तु सन्निकर्ष-साम्येऽप्यन्यद्वस्त्विति फलबलात् कॢप्तम् ; बुद्धिवृत्त्यारूढतयैव त्वन्यद्भोग्यं भवति पुरुषस्य, न स्वतः, सर्वदा सर्वभानापत्तेः । ताश्च बुद्धिवृत्तयो नाज्ञातास्तिष्ठन्ति, ज्ञानेच्छासुखादीनामज्ञातसत्तास्वीकारे, तेष्वपि घटा-दाविव संशयादिप्रसङ्गात् अहं जानामि न वा सुखी न वेत्यादिरूपेण ; अतस्तेषां सदा ज्ञातत्वात् तद्द्रष्टा चेतनोऽपरिणामीत्यायातम् ; चेतनस्य परिणामित्वे कदाचिदान्ध्यपरिणामेन सत्या अपि बुद्धिवृत्तेरदर्शनेन संशयाद्यापत्तेरिति । एवं पारार्थ्यापारार्थ्यादिकमपि पूर्वोक्तं वैधर्म्यजातं बोध्यम् ॥ २ ॥

"यद्यत् प्रीतिकरं पुंसां वस्तु मैत्रेय ! जायते।
तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति॥"

इति॥ ८॥

केवला दुःखनिवृत्तिर्न पुरुषार्थः, किन्तु सुखोपरक्तेति मतमपाकरोति—

( सुखप्राप्तिसहितदुःखनिवृत्तेः पुरुषार्थत्वमिति मतखण्डनम्।— )

## सुखलाभाभावादपुरुषार्थत्वमिति चेन्न द्वैविध्यात्॥ ९॥

सुखलाभाभावान्मोक्षाख्यदुःखाभावस्यापुरुषार्थत्वमिति चेत्? न; पुरुषार्थस्य द्वैविध्यात् द्विप्रकारत्वात्, सुख-दुःखाभावत्वाभ्यामित्यर्थः। सुखी स्यां, दुःखी न स्यामिति हि पृथगेव लोकानां प्रार्थना दृश्यते इति॥ ९॥

शङ्कते—

( दुःखनिवृत्तिः पुरुषार्थ इति मते शङ्कोत्थापनम्।— )

## निर्गुणत्वमात्मनोऽसङ्गत्वादिश्रुतेः॥ १०॥

नन्वात्मनो निर्गुणत्वं सुख-दुःख-मोहाद्यखिलगुणशून्यत्वं नित्यमेव सिद्धम्, असङ्गत्वश्रुतेः विकारहेतुसंयोगाभावश्रवणात्, तं विना च गुणाख्यविकारासम्भवात्; अतो न दुःखनिवृत्तिरपि पुरुषार्थो घटते इत्यर्थः। ननु संयोगं विना स्वयमेव विकारो भवत्विति चेत्? न—

दाहाय नानलो वह्नेर्नापः क्लेदाय चाम्भसः।
तद्द्रव्यमेव तद्द्रव्यविकाराय न वै यतः॥
किञ्च स्वयं विकारित्वे मोक्षो नैवोपपद्यते।
स्वयं मोहविकारेण पुनर्बन्धप्रसङ्गतः॥

इति। तथा चोक्तं कौर्मे—

"यद्यात्मा मलिनोऽस्वच्छो विकारी स्यात् स्वभावतः।
न हि तस्य भवेन्मुक्तिर्जन्मान्तरशतैरपि॥"

इति॥ १०॥

समाधत्ते—

( उक्तशङ्कायाः समाधानम् ।— )

## परधर्मत्वेऽपि तत्सिद्धिरविवेकात् ॥ ११ ॥

सुख-दुःखादिगुणानां चित्तधर्मत्वेऽपि तत्रात्मनि सिद्धिः प्रतिविम्ब-रूपेणावस्थितिः अविवेकान्निमित्तात् प्रकृति-पुरुषसंयोगद्वारेत्यर्थः। एतच्च प्रथमाध्याये प्रतिपादितं, "निमित्तत्वमविवेकस्य न दृष्टहानिः" (७४ सू०) इति तृतीयाध्यायसूत्रे चेति । तथा च स्फटिके लौहित्यमिव पुरुषे प्रतिविम्बरूपेण दुःखसत्त्वात् तन्निवृत्तिरेव पुरुषार्थः,प्रतिविम्बद्वारक-दुःखसम्बन्धस्यैव भोगतया प्रतिविम्बरूपेणैव दुःखस्य हेयत्वादिति ॥ ११ ॥

अविवेकमूलः पुरुषे गुणबन्धः, अविवेकस्तु किम्मूलकः ? इत्या-काङ्क्षायामाह—

( अविवेकस्य मूलप्रदर्शनम् ।— )

## अनादिरविवेकोऽन्यथा दोषद्वयप्रसक्तेः ॥ १२ ॥

अगृहीतासंसर्गकमुभयविषयकज्ञानमविवेकः, स च प्रवाहरूपेणा-नादिश्चित्तधर्मः प्रलये वासनारूपेण तिष्ठति, अन्यथा तस्य सादित्वे दोषद्वयप्रसङ्गात् । सादित्वे हि स्वत एवोत्पादे मुक्तस्यापि बन्धापत्तिः । कर्मादिजन्यत्वे च कर्मादिकं प्रत्यपि कारणत्वेनाविवेकान्तरान्वेषणेऽन-वस्थेत्यर्थः । अयं चाविवेको वृत्तिरूपः प्रतिविम्बात्मना पुरुषधर्म इव भवतीत्यतः पुरुषस्य बन्धप्रयोजक इति प्रागेवोक्तं वक्ष्यते च ॥ १२ ॥

ननु चेदनादिस्तर्हि नित्यः स्यादिति ? तत्राह—

( अविवेकस्य अनादित्वे नित्यत्वशङ्कानिरसनम् ।— )

## न नित्यः स्यादात्मवदन्यथाऽनुच्छित्तिः ॥ १३ ॥

आत्मवन्नित्योऽखण्डानादिर्न भवति, किन्तु प्रवाहरूपेणानादिः, अन्यथा अनादिभावस्योच्छेदानुपपत्तेरित्यर्थः ॥ १३ ॥

बन्धकारणमुक्त्वा मोक्षकारणमाह—

( अविवेकस्य नाशकारणनिर्देशः ।— )

## प्रतिनियतकारणनाश्यत्वमस्य ध्वान्तवत् ॥ १४ ॥

अस्य बन्धकारणस्याविवेकस्य शुक्ति-रजतादिस्थले प्रतिनियतं यन्न.प्र-

कारणं विवेकस्तन्नाश्यत्वं, तमोवत्, अन्धकारो हि प्रतिनियतेनालोके-नैव नाश्यते, नान्यसाधनेनेत्यर्थः । तदुक्तं विष्णुपुराणे—

"अन्धन्तम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम् ।
यथा सूर्य्यस्तथा ज्ञानं यद्विप्रर्षे ! विवेकजम् ॥"

इति ॥ १४ ॥

विवेकेनैवाविवेको नाश्यते इति प्रतिनियमस्य ग्राहकमप्याह—

( अविवेकस्य विवेकनाश्यत्वे प्रतिनियतग्राहकत्वोक्तिः ।— )

## अत्रापि प्रतिनियमोऽन्वयव्यतिरेकात् ॥ १५ ॥

ध्वान्तालोकयोरिव प्रकृतेऽपि प्रतिनियमः शुक्ति-रजतादिष्वन्वय-व्यतिरेकाभ्यामेव ग्राह्य इत्यर्थः । अथवैवं व्याख्येयं—ननु विवेक-स्यापि किं प्रतिनियतं कारणम् ? तत्राह—अत्रापि विवेकेऽपि कारण-नियमोऽन्वय-व्यतिरेकाभ्यामेव सिद्धः । श्रवण-मनन-निदिध्यासनरूपमेव कारणं, न तु कर्मादीनि, कर्मादिकं तु वहिरङ्गमेवेत्यर्थः ॥ १५ ॥

बन्धस्य स्वाभाविकत्वादिकं न सम्भवतीति प्रथमपादोक्तं स्मारयति—

( बन्धस्य अविवेकमूलकत्वमेवेति पूर्वोक्तिस्मारणम् ।— )

## प्रकारान्तरासम्भवादविवेक एव बन्धः ॥ १६ ॥

बन्धोऽत्र दुःखयोगाख्यबन्धकारणम् । शेषं सुगमम् ॥ १६ ॥

ननु मुक्तेरपि कार्य्यतया विनाशापत्त्या पुनर्बन्धः स्यादिति ? तत्राह—

( मुक्तस्य पुनर्बन्धाशङ्कानिरसनम् ।— )

## न मुक्तस्य पुनर्बन्धयोगोऽप्यनावृत्तिश्रुतेः ॥ १७ ॥

भावकार्य्यस्यैव विनाशितया मोक्षस्य नाशो नास्ति, "न स पुनरावर्त्तते" ( कालाग्निरुद्र० २ ) इति श्रुतेरित्यर्थः । अपि-शब्दः पूर्वसूत्रोक्तार्थ-समुच्चये ॥ १७ ॥

( मुक्तस्य पुनर्बन्धे दोषप्रदर्शनम् ।— )

## अपुरुषार्थत्वमन्यथा ॥ १८ ॥

अन्यथा मुक्तस्यापि पुनर्बन्धे प्रलयवदेव मोक्षस्यापुरुषार्थत्वं,परमपुरुषार्थ-त्वाभावो वा स्यादित्यर्थः ॥ १८ ॥

अपुरुषार्थत्वे हेतुमाह—

( मुक्तस्य पुनर्बन्धे पुरुषार्थत्वाभावस्य हेतुप्रदर्शनम्।— )

## अविशेषापत्तिरुभयोः॥ १९॥

भाविबन्धत्वसाम्येनोभयोर्मुक्त-बद्धयोर्विशेषो न स्यात्, ततश्चापुरुषार्थत्वमित्यर्थः॥ १९॥

नन्वेवं बद्ध-मुक्तयोर्विशेषाभ्युपगमे नित्यमुक्तत्वं कथमुच्यते? तत्राह—

( आत्मनो नित्यमुक्तत्वसमर्थने युक्तिप्रदर्शनम्।— )

## मुक्तिरन्तरायध्वस्तेर्न परः॥ २०॥

वक्ष्यमाणान्तरायस्य ध्वंसादतिरिक्तः पदार्थो न मुक्तिरित्यर्थः। यथा हि स्वभावशुक्लस्य स्फटिकस्य जपोपाधिनिमित्तं रक्तत्वं शौक्ल्यावरकरूपं विघ्नमात्रं, न तु जपोपधानेन शौक्ल्यं नश्यति, जपापाये चोत्पद्यते, तथैव स्वभावनिर्दुःखस्यात्मनो बुद्ध्युपाधिकं दुःखप्रतिबिम्बं तदावरकरूपं विघ्नमात्रं, न तु बुद्ध्युपधानेन दुःखं जायते, तदपाये च नश्यतीति। अतो नित्यमुक्त आत्मा, बन्ध-मोक्षौ तु व्यावहारिकावित्यविरोध इति॥ २०॥

नन्वेवं बन्ध-मोक्षयोर्मिथ्यात्वे मोक्षस्य पुरुषार्थताप्रतिपादकश्रुत्यादि-विरोधः? इत्याह—

( मोक्षस्य पुरुषार्थताप्रतिपादकश्रुतेरविरोधप्रदर्शनम्।— )

## तत्राप्यविरोधः॥ २१॥

तत्राप्यन्तरायध्वंसस्य मोक्षत्वेऽपि पुरुषार्थत्वाविरोध इत्यर्थः। दुःखयोग-वियोगाविव हि पुरुषे कल्पितौ, न तु दुःखभोगोऽपि; भोगश्च प्रतिबिम्बरूपेण दुःखसम्बन्ध इत्यतः प्रतिबिम्बरूपेण दुःखनिवृत्तिर्यथार्थैव पुरुषार्थः, स एवान्तरायध्वंसः, तादृशश्च मोक्षो यथार्थ एवेति भावः॥ २१॥

नन्वन्तरायध्वंसमात्रं चेन्मुक्तिः, तर्हि श्रवणमात्रेणैव तत्सिद्धिः स्यात्, अज्ञानप्रतिबद्धकण्ठचामीकरसिद्धिवदिति? तत्राह—

( श्रवणमात्रेणैव ज्ञानोत्पत्तेरनियतत्वप्रदर्शनम्।— )

## अधिकारित्रैविध्यान्न नियमः॥ २२॥

उत्तम-मध्यमाधमास्त्रिविधा ज्ञानाधिकारिणः, तेन श्रवणमात्रा-

नन्तरमेव मानससाक्षात्कारः सर्वेषामिति न नियम इत्यर्थः; अतो मन्दाधिकारदोषाद्विरोचनादीनां श्रवणमात्राच्चित्तविलायनक्षमं मानसज्ञानं नोत्पन्नं, न तु श्रवणस्य ज्ञानजननासामर्थ्यादिति ॥ २२ ॥

न केवलं श्रवणमात्रं ज्ञाने दृष्टकारणम्, अन्यदपीत्याह—

( मननादीनामपि ज्ञानसाधनत्वोक्तिः ।— )

## दार्ढ्यार्थमुत्तरेषाम् ॥ २३ ॥

श्रवणादुत्तरेषां मनन-निदिध्यासनादीनामन्तरायध्वंसस्यात्यन्तिकत्वरूपदार्ढ्यार्थं, नियम इत्यनुषज्यते ॥ २३ ॥

उत्तराण्येव साधनान्याह—

( योगसाधनार्थम् आसनशब्दस्यार्थनिर्देशः ।— )

## स्थिरसुखमासनमिति न नियमः ॥ २४ ॥

आसने पद्मासनादिनियमो नास्ति, यतः स्थिरं सुखं च यत् तदेवासनमित्यर्थः ॥ २४ ॥

मुख्यं साधनमाह—

( योगसाधने मुख्यस्य ध्यानस्य लक्षणम् ।— )

## ध्यानं निर्विषयं मनः ॥ २५ ॥

वृत्तिशून्यं यदन्तःकरणं भवति, तदेव ध्यानं योगश्चित्तवृत्तिनिरोधरूप इत्यर्थः, एतत्साधनत्वेन ध्यानस्य वक्ष्यमाणत्वादिति ॥ २५ ॥

ननु योगायोगयोः पुरुषस्यैकरूप्यात् किं योगेन ? इत्याशङ्क्य समाधत्ते—

( अयोगावस्थातो योगावस्थायाः वैशिष्ट्योक्तिः ।— )

## उभयथाऽप्यविशेषश्चेन्नैवमुपरागनिरोधात् विशेषः ॥ २६ ॥

उपरागनिरोधात् वृत्तिप्रतिबिम्बापगमात् योगावस्थायामयोगावस्थातो विशेषः पुरुषस्येति सिद्धान्तदलार्थः । शेषं व्याख्यातप्रायम् ॥ २६ ॥

ननु निःसङ्गे कथमुपरागः ? तत्राह—

( निःसङ्गत्वेऽपि उपरागसम्भावनोक्तिः ।— )

## निःसङ्गेऽप्युपरागोऽविवेकात् ॥ २७ ॥

निःसङ्गे यद्यपि पारमार्थिक उपरागो नास्ति, तथाऽप्युपराग इव भवतीति कृत्वा प्रतिविम्ब एवोपराग इति व्यवह्रियते उपरागविवेकि-भिरित्यर्थः ॥ २७ ॥

एतदेव विवृणोति—

( उपरागस्य आभिमानिकत्वविवरणम् ।— )

## जपा-स्फटिकयोरिव नोपरागः किन्त्वभिमानः ॥ २८ ॥

यथा जपा-स्फटिकयोर्नोपरागः, किन्तु जपाप्रतिविम्बवशादुपरागाभि-मानमात्रं, रक्तः स्फटिक इति ; तथैव बुद्धि-पुरुषयोर्नोपरागः, किन्तु बुद्धि-प्रतिविम्बवशादुपरागाभिमानोऽविवेकवशादित्यर्थः ; अत उपरागतुल्य-तया वृत्तिप्रतिविम्ब एव पुरुषोपराग इति सूत्रद्वयपर्य्यवसितोऽर्थः । स एव च दुःखात्मकवृत्तेरुपरागो दुःखनिवृत्त्याख्यमोक्षस्यान्तरायः, तस्य च ध्वंसश्चित्तलयात्, सोऽपि च चित्तवृत्तिनिरोधाख्येनासम्प्रज्ञातयोगेनेत्यतो योगादेवान्तरायध्वंसो भवतीति योगशास्त्रस्यापि सिद्धान्तः ॥ २८ ॥

"ध्यानं निर्विषयं मनः" (२५) इति योग उक्तः, तस्य साधनान्याचक्षाण एव यथोक्तोपरागस्य निरोधोपायमाह—

( उपरागनिरोधोपायप्रदर्शनम् ।— )

## ध्यान-धारणाऽभ्यास-वैराग्यादिभिस्तन्निरोधः ॥२९॥

समाधिद्वारा ध्यानं योगस्य कारणं, ध्यानस्य च कारणं धारणा, तस्याश्च कारणमभ्यासश्चित्तस्थैर्य्यसाधनानुष्ठानम्,अभ्यासस्यापि कारणं विषयवैराग्यं, तस्यापि दोषदर्शन-यम-नियमादिकमिति पातञ्जलोक्तप्रक्रियया तन्निरोधः उपरागनिरोधो भवति चित्तवृत्तिनिरोधाख्ययोगद्वारेत्यर्थः ॥ २९ ॥

चित्तनिष्ठध्यानादिना पुरुषस्योपरागनिरोधे पूर्वाचार्य्यसिद्धं द्वारं दर्शयति—

( उपरागनिरोधे पूर्वाचार्य्यसिद्धोपायप्रदर्शनम् ।— )

## लय-विक्षेपयोर्व्यावृत्त्येत्याचार्य्याः ॥ ३० ॥

ध्यानादिना चित्तस्य निद्रावृत्तेः प्रमाणादिवृत्तेश्च निवृत्त्या पुरुषस्यापि वृत्त्युपरागनिरोधो भवति, विम्बनिरोधे प्रतिविम्बस्यापि निरोधादिति पूर्वाचार्य्या आहुरित्यर्थः । यथा पतञ्जलिः,—"योगश्चित्तवृत्तिनिरोधः" ( समा० पा० २ )"तदा द्रष्टुः स्वरूपेऽवस्थानम्" ( समा० पा० ३ ) "वृत्ति-सारूप्यमितरत्र" ( समा० पा० ४ ) इति सूत्रत्रयेणैतदेवाह । तथा—

"नित्यः सर्वगतो ह्यात्मा बुद्धिसन्निधिमत्तया ।
यथा यथा भवेद्बुद्धिरात्मा तद्वदिहेष्यते ॥"

इत्यादिस्मृतयोऽप्येतदाहुरिति । तदेवमसम्प्रज्ञातयोगादेव मोक्षान्तराय-ध्वंस इति प्रघट्टकार्थः ॥ ३० ॥

ध्यानादौ गुहादिस्थाननियमो नास्तीत्याह—

( ध्यानाद्यर्थं स्थाननियमाभावोक्तिः ।— )

## न स्थाननियमश्चित्तप्रसादात् ॥ ३१ ॥

चित्तप्रसादादेव ध्यानादिकम्, अतस्तत्र न गुहादिस्थाननियम इत्यर्थः । शास्त्रे तु औत्सर्गिकाभिप्रायेणैवारण्य-गिरिगुहादिस्थानं योग-स्योद्दिष्टमिति ; अत एव ब्रह्मसूत्रमपि—"यत्रैकाग्रता तत्राविशेषात्" ( ४।१।११ ) इति ॥ ३१ ॥

समाप्तो मोक्षविचारः । इदानीं पुरुषापरिणामित्वाय जगत्कारणं विचारयति—

( प्रकृतेर्जगत्कारणत्वकथनम् ।— )

## प्रकृतेराद्योपादानता अन्येषां कार्य्यत्वश्रुतेः ॥ ३२ ॥

महदादीनां कार्य्यत्वश्रवणात् तेषां मूलकारणतया प्रकृतिः सिध्य-तीत्यर्थः ॥ ३२ ॥

पुरुष एवोपादानं भवतु ? तत्राह—

( पुरुषस्य जगत्कारणत्वनिरसनम् ।— )

## नित्यत्वेऽपि नात्मनो योगत्वाभावात् ॥ ३३ ॥

गुणवत्त्वं सङ्गित्वं चोपादानयोग्यता, तयोरभावात् पुरुषस्य नित्यत्वेऽपि नोपादानत्वमित्यर्थः ॥ ३३ ॥

ननु "बह्वीः प्रजाः पुरुषात् सम्प्रसूताः" ( मुण्ड० २।१।५ ) इत्यादिश्रुतेः पुरुषस्य कारणत्वावगमात् विवर्त्तादिवादा आश्रयणीयाः ? इत्याशङ्क्याह—

( पुरुषस्य जगत्कारणत्ववादानां श्रुतिविरुद्धत्वोक्तिः ।— )

## श्रुतिविरोधान्न कुतर्कापसदस्यात्मलाभः ॥३४॥

पुरुषकारणतायां ये ये पक्षाः सम्भाविताः, ते सर्वे श्रुतिविरुद्धा इत्यतस्तदभ्युपगन्तॄणां कुतार्किकाधमानामात्मस्वरूपज्ञानं न भवतीत्यर्थः । एतेनात्मनि सुख-दुःखादिगुणोपादानत्ववादिनोऽपि कुतार्किका एव, तेषामप्यात्मयथार्थज्ञानं नास्तीत्यवगन्तव्यम् । आत्मकारणताश्रुतयश्च शक्ति-शक्तिमदभेदेनोपासनार्था एव, "अजामेकाम्" ( श्वेताश्व० ४।५ ) इत्यादिश्रुतिभिः प्रधानकारणतासिद्धेः । यदि चाकाशस्याश्रयधिष्ठानकारणतावदात्मनः कारणत्वमुच्यते, तदा तन्न निराकुर्मः, परिणामस्यैव प्रतिषेधादिति ॥ ३४ ॥

स्थावर-जङ्गमादिषु पृथिव्यादीनामेव कारणत्वदर्शनात् कथं प्रकृतेः सर्वोपादानत्वम् ? तत्राह—

( प्रकृतेः सर्वजगत्कारणत्वसमर्थने युक्तिप्रदर्शनम् ।— )

## पारम्पर्य्येऽपि प्रधानानुवृत्तिरणुवत् ॥ ३५ ॥

स्थावरादिषु परम्परया कारणत्वेऽपि तेषु प्रधानस्यानुमानादुपादानत्वमक्षतम् ; यथा अङ्कुरादिद्वारकत्वेऽपि स्थावरादिषु पार्थिवाद्यणूनामनुगमादुपादानत्वमित्यर्थः ॥ ३५ ॥

वनन्यायेन प्रकृतेर्व्यापकत्वे प्रमाणमाह—

( प्रकृतेर्विभुत्वे प्रमाणप्रदर्शनम् ।— )

## सर्वत्र कार्य्यदर्शनाद्विभुत्वम् ॥ ३६ ॥

अव्यवस्थया सर्वत्र विकारदर्शनात् प्रधानस्य विभुत्वम् ; यथा अणोर्घटादिव्यापित्वमित्यर्थः । एतच्च प्रागेव व्याख्यातम् ॥ ३६ ॥

ननु परिच्छिन्नत्वेऽपि यत्र कार्य्यमुत्पद्यते तत्र गच्छतीति वक्तव्यम् ? तत्राह—

( प्रकृतेर्मूलकारणत्वाभावशङ्कानिरसनम् ।— )

**गतियोगेऽप्याद्यकारणताहानिरणुवत् ॥ ३७ ॥**

गतिस्वीकारेऽपि परिच्छिन्नतया मूलकारणत्वाभावः, पार्थिवाद्यणु-दृष्टान्तेनेत्यर्थः । अथवेत्थं व्याख्येयं—ननु त्रिगुणात्मकप्रधानस्य अन्योऽन्यसंयोगार्थं श्रुति-स्मृतिषु क्रिया चोभाख्या श्रूयते, क्रियावत्त्वाच्च तन्त्वादिदृष्टान्तेन मूलकारणत्वाभावः ? इत्याशङ्का परिहरति—गतियोगेऽप्याद्यकारणताहानिरणुवत् । गतिः क्रिया, तद्वत्त्वेऽपि मूलकारण-ताया अहानिः, यथा वैशेषिकमते पार्थिवाद्यणूनामित्यर्थः ॥ ३७ ॥

ननु पृथिव्यादीनां नवानामेव द्रव्याणां दर्शनात् कथं पृथिवीत्वादि-शून्यं प्रधानाख्यं द्रव्यं घटेत ? न च प्रधानं द्रव्यमेव माऽस्त्विति वाच्यं, संयोग-विभाग-परिणामादिभिर्द्रव्यत्वसिद्धेरिति ? तत्राह—

( प्रकृतेर्नवद्रव्याधिकद्रव्यत्वोक्तिः ।— )

**प्रसिद्धाधिक्यं प्रधानस्य न नियमः ॥ ३८ ॥**

प्रसिद्धनवद्रव्याधिक्यमेव प्रधानस्य, अतो नवैव द्रव्याणीति न नियम इत्यर्थः । अष्टानामेव कार्य्यत्वश्रवणं चात्र तर्क इति भावः ॥ ३८ ॥

किं सत्त्वादयो गुणा एव प्रकृतिः ? अथवा गुणत्रयरूपद्रव्यत्रयाधार-भूता प्रकृतिः ? इति संशयेऽवधारयति—

( सत्त्वादिगुणत्रयाणां प्रकृतिस्वरूपत्वोक्तिः ।— )

**सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात् ॥ ३९ ॥**

सत्त्वादिगुणानां प्रकृतिधर्मत्वं नास्ति, प्रकृतिस्वरूपत्वादित्यर्थः । यद्यपि श्रुति-स्मृतिषूभयमेव श्रूयते, तथाऽपि तर्कतः स्वरूपत्वमेवावधार्य्यते, न तु धर्मत्वम् । तथा हि, सत्त्वादित्रयं किं प्रकृतेः कार्य्यरूपो धर्मः ? अथवा आकाशस्य वायुवत् संयोगमात्रेण नित्य एव धर्मः स्यात् ? आद्ये एकस्या एव प्रकृतेर्द्रव्यान्तरसङ्गं विना विचित्रगुणत्रयोत्पत्त्यसम्भवः, दृष्टविरुद्ध-कल्पनाऽनौचित्यं च । अन्त्ये नित्येभ्य एव सत्त्वादिभ्योऽन्योऽन्यसङ्गेन विचित्रसकलकार्य्योपपत्तौ तदतिरिक्तप्रकृतिकल्पनावैयर्थ्यमिति सत्त्वादीनां प्रकृतिकार्य्यत्वादिवचनानि चांशतः प्रकाशादिकार्य्योपहिततयाऽभि-व्यक्त्यादिकमेव बोधयन्ति ; यथा पृथिवीतो द्वीपोत्पत्तिरिति ॥ ३९ ॥

प्रधानप्रवृत्तेः प्रयोजनमवधारयति, निष्प्रयोजनप्रवृत्त्यभ्युपगमे मोक्षानुपपत्तेरिति—

( प्रधानप्रवृत्तेः प्रयोजनावधारणम् ।— )

**अनुपभोगेऽपि पुमर्थं सृष्टिः प्रधानस्योष्ट्र-कुङ्कुमवहनवत् ॥ ४० ॥**

तृतीयाध्यायस्थे "प्रधानसृष्टिः परार्थम्—"(५८)इत्यादिसूत्रे व्याख्यातमिदम् ॥ ४० ॥

विचित्रसृष्टौ निमित्तकारणमाह—

( सृष्टिवैचित्र्यस्य कारणप्रदर्शनम् ।— )

**कर्मवैचित्र्यात् सृष्टिवैचित्र्यम् ॥ ४१ ॥**

कर्म धर्माधर्मौ । सुगममन्यत् ॥ ४१ ॥

ननु भवतु प्रधानात् सृष्टिः, प्रलयस्तु कस्मात्? न ह्येकस्मात् कारणात् विरुद्धकार्य्यद्वयं घटते, तत्राह—

( प्रकृतेः सृष्टि-प्रलययोरुभयोरेव कारणत्वप्रदर्शनम् ।— )

**साम्य-वैषम्याभ्यां कार्य्यद्वयम् ॥ ४२ ॥**

सत्त्वादिगुणत्रयं प्रधानं, तेषां च वैषम्यं न्यूनातिरिक्तभावेन संहननं, तदभावः साम्यं, ताभ्यां हेतुभ्यामेकस्मादेव सृष्टि प्रलयरूपं विरुद्धकार्य्यद्वयं भवतीत्यर्थः । स्थितिस्तु सृष्टिमध्ये प्रविष्टेत्याशयेन तत्कारणत्वं प्रधानस्य न पृथक् विचारितम् ॥ ४२ ॥

ननु प्रधानस्य सृष्टिस्वाभाव्याज्ज्ञानोत्तरमपि संसारः स्यात्? तत्राह—

( ज्ञानानन्तरमपि प्रकृतेः सृष्टिकर्तृत्वाशङ्कानिरसनम् ।— )

**विमुक्तबोधान्न सृष्टिः प्रधानस्य लोकवत् ॥ ४३ ॥**

विमुक्ततया पुरुषसाक्षात्काराद्धेतोः प्रधानस्य तत्पुरुषार्थं पुनः सृष्टिर्न भवति, कृतार्थत्वात्, लोकवत्; यथा लोका अमात्यादयो राज्ञोऽर्थं सम्पाद्य कृतार्थाः सन्तो न पुनः राजार्थं प्रवर्त्तन्ते, तथैव प्रधानमित्यर्थः । विमुक्तमोक्षार्थं हि प्रधानप्रवृत्तिरित्युक्तं, स च ज्ञानान्निष्पन्न इति भावः ॥ ४३ ॥

ननु प्रधानस्य सृष्ट्युपरमो नास्ति, अज्ञानां संसारदर्शनात्; तथा च, प्रधानसृष्ट्या मुक्तस्यापि पुनर्बन्धः स्यात्? तत्राह—

( मुक्तस्य पुनर्बन्धाशङ्कानिरसनम् ।— )

## नान्योपसर्पणेऽपि मुक्तोपभोगो निमित्ताभावात् ॥ ४४ ॥

कार्य्य-कारणसङ्घातादिसृष्ट्याऽन्यान् प्रति प्रधानस्योपसर्पणेऽपि न मुक्तस्योपभोगो भवति, निमित्ताभावात्, उपभोगे निमित्तानां स्वोपाधि-संयोगविशेष-तत्कारणाविवेकादीनामभावादित्यर्थः। इदमेव हि मुक्तं प्रति प्रधानसृष्ट्युपरमो यत् तद्भोगहेतोः स्वोपाधिपरिणामविशेषस्य जन्माख्यस्यानुत्पादनमिति ॥ ४४ ॥

नन्वियं व्यवस्था तदा घटेत यदि पुरुषबहुत्वं स्यात्, तदेव त्वात्माद्वैत-श्रुतिबाधितम्? इत्याशङ्क्याह—

( पुरुषबहुत्वोक्तिः ।— )

## पुरुषबहुत्वं व्यवस्थातः ॥ ४५ ॥

"ये तद्विदुरमृतास्ते भवन्ति, अथेतरे दुःखमेवापियन्ति" ( बृह० उ० ४।४।१४ ) इत्यादिश्रुत्युक्तबन्ध-मोक्षव्यवस्थात एव पुरुषबहुत्वं सिध्यतीत्यर्थः ॥ ४५ ॥

ननूपाधिभेदाद्बन्ध-मोक्षव्यवस्था स्यात्? तत्राह—

( उपाधिभेदात् बन्ध-मोक्षव्यवस्था इति मतखण्डनम् ।— )

## उपाधिश्चेत् तत्सिद्धौ पुनर्द्वैतम् ॥ ४६ ॥

उपाधिश्चेत् स्वीक्रियते तर्ह्युपाधिसिद्धैव पुनरद्वैतभङ्ग इत्यर्थः। वस्तुतस्तूपाधिभेदेऽपि व्यवस्था न सम्भवतीति प्रथमाध्याये एव प्रपञ्चितम् ॥ ४६ ॥

ननूपाधयोऽप्याविद्यका इति न तैरद्वैतभङ्गः? इत्याशङ्कायामाह—

( उपाधिस्वीकारेऽपि नाद्वैतभङ्ग इति मतनिरसनम् ।— )

## द्वाभ्यामपि प्रमाणविरोधः ॥ ४७ ॥

पुरुषोऽविद्येति द्वाभ्यामप्यङ्गीकृताभ्यामद्वैतप्रमाणस्य श्रुतेर्विरोधस्तदवस्थ एवेत्यर्थः॥ ४७॥

अपरमपि दूषणद्वयमाह—

( पुरुषाविद्यास्वीकारे दूषणान्तरद्वयप्रदर्शनम्।— )

## द्वाभ्यामप्यविरोधान्न पूर्वमुत्तरं च साधकाभावात्॥ ४८॥

द्वाभ्यामप्यङ्गीकृताभ्यां हेतुभ्यां पूर्वं पूर्वपक्षो भवतां न घटते, अस्माभिरपि प्रकृतिः पुरुषश्चेति द्वयोरेवाङ्गीकारात्, विकारस्यानित्यतया वाचारम्भणमात्रताया अस्माभिरपीष्टत्वात्। ननु पुरुषनानात्वस्वीकारात् प्रकृतेर्नित्यत्वस्वीकाराच्चास्त्येवास्मद्विरोधः? इत्याशङ्क्य दूषणान्तरमाह, उत्तरं चेत्यादिना। अद्वैतवादिनामुत्तरं सिद्धान्तश्च न घटते, आत्मसाधकप्रमाणस्याभावात्, तदङ्गीकारे च तेनैवाद्वैतहानिरिति जितं नैरात्म्यवादिभिरित्यर्थः॥ ४८॥

ननु स्वप्रकाशत आत्मा सेत्स्यति? तत्राह—

( आत्मनः स्वप्रकाशत्वमतखण्डनम्।— )

## प्रकाशतस्तत्सिद्धौ कर्म-कर्तृविरोधः॥ ४९॥

चैतन्यरूपप्रकाशतश्चैतन्यसिद्धौ कर्म-कर्तृविरोध इत्यर्थः। प्रकाश्य-प्रकाशसम्बन्धे हि प्रकाशनमालोकादिषु दृष्टं, स्वस्य साक्षात् स्वस्मिन् सम्बन्धश्च विरुद्ध इति। अस्मन्मते तु बुद्धिवृत्त्याख्यप्रमाणाङ्गीकारात् तद्द्वारा प्रतिबिम्बरूपस्य स्वस्य बिम्बरूपे स्वस्मिन् सम्बन्धो घटते, यथा सूर्य्ये जलद्वारा प्रतिबिम्बरूपस्वसम्बन्ध इति भावः। आत्मनः स्वप्रकाशत्वश्रुतिस्त्वनन्योपाधिकप्रकाशादिपरा बोध्या॥ ४९॥

ननु नास्ति कर्म-कर्तृविरोधः, स्वनिष्ठप्रकाशधर्मद्वारा स्वस्य स्वसम्बन्धसम्भवात्; यथा वैशेषिकाणां स्वनिष्ठज्ञानद्वारा स्वस्य स्वयं विषय इति? तत्राह—

( आत्मनः स्वप्रकाशत्वमतखण्डने युक्त्यन्तरम्।— )

## जड़व्यावृत्तो जड़ं प्रकाशयति चिद्रूपः॥ ५०॥

चेतने प्रकाशरूपधर्मः सूर्यादिष्विव नास्ति, किन्तु चित्स्वरूप एव पदार्थो जड़ं प्रकाशयति ; यतो जड़व्यावृत्तिमात्रेण चिदित्युच्यते, न तु जड़विलक्षणधर्मवत्तयेत्यर्थः ; अत एव निर्धर्मतया "स एष नेति नेति" (वृह० उ० ३।८।२६) इत्येव श्रुत्योपदिश्यते, न तु विधिमुखतयेति । तथा च, स्मृतिरपि—

"इदं तदिति निर्देष्टुं गुरुणाऽपि न शक्यते"

इति । "जड़व्यावृत्तौ" इति पाठेऽपि हेतौ सप्तम्यामयमेवार्थः । अस्मिंश्च सूत्रे जड़मेव प्रकाशयति चिद्रूपः, न त्वात्मानमिति नार्थः ; तथा सति हि तस्याज्ञेयत्वेन साधकाभावरूपं बाधकं परैरुपन्यासानर्हं, स्वस्यापि तुल्यन्यायत्वादिति ॥ ५० ॥

नन्वेवं प्रमाणाद्यनुरोधेन द्वैतसिद्धावद्वैतश्रुतेः का गतिः ? तत्राह—

( द्वैतसिद्धावपि अद्वैतश्रुतिविरोधाभावोक्तिः ।— )

## न श्रुतिविरोधो रागिणां वैराग्याय तत्सिद्धेः ॥ ५१ ॥

अद्वैतश्रुतिविरोधस्तु नास्ति, रागिणां पुरुषातिरिक्ते वैराग्यायैव श्रुतिभिरद्वैतसाधनात्, पुरुषज्ञाने इव द्वैताभावज्ञाने स्वतन्त्रफलान्तराश्रवणात् । तच्च वैराग्यं सदद्वैतेनैवोपपद्यते, सत्त्वं च कूटस्थत्वमित्यर्थः, अत एव श्रुतिरपि सदद्वैतमेव छान्दोग्ये प्रतिपादितवतीति भावः ॥५१॥

न केवलमुक्तयुक्त्यैवाद्वैतवादिनो हेयाः, अपि तु जगदसत्यताग्राहकप्रमाणाभावेनापीत्याह—

( जगतः सत्यत्वस्थापने अद्वैतवादिनां हेयत्वप्रदर्शनम् ।— )

## जगत्सत्यत्वमदुष्टकारणजन्यत्वाद्बाधकाभावात् ॥ ५२ ॥

निद्रादिदोषदुष्टान्तःकरणादिजन्यत्वेन स्वाप्नविषयशङ्खपीतिमादीनामसत्यत्वं लोके दृष्टं, तच्च महदादिप्रपञ्चे नास्ति, तत्कारणस्य प्रकृतेर्हिरण्यगर्भबुद्धेश्चादुष्टत्वात्, "यथापूर्वमकल्पयत्" ( महानारा० ५।७ ) इत्यादिश्रवणात् । ननु "नेह नानास्ति किञ्चन" ( वृह० उ० ४।४।१९ ) इत्यादि श्रुत्या बाधितत्वेनाविद्यादिनामा कश्चनानादिर्दोषः कल्पनीयः ?

तत्राह, बाधकाभावादिति। अयं भावः,—"नेह नानास्ति किञ्चन" (बृह० उ० ४।४।१९) इत्यादिश्रुतयो याः परैः प्रपञ्चबाधकतयाऽभिप्रेयन्ते, ताः प्रकरणानुसारेण विभागादिप्रतिषेधिका एव, न तु प्रपञ्चात्यन्ततुच्छतापराः, स्वस्यापि बाधापत्त्या स्वार्थासाधकत्वप्रसङ्गात्। न हि स्वप्नकालीनशब्दस्य बाधे तज्ज्ञापितोऽप्यर्थः पुनर्न सन्दिह्यते इति; तस्मादात्मविघातकतया श्रुतयो न प्रपञ्चस्यात्यन्तबाधपरा इति। तत्र "नेह नानाऽस्ति किञ्चन" (बृह० उ० ४।४।१९) इत्यादिश्रुतिर्ब्रह्मविभक्तं किमपि नास्तीत्यर्थः, "सर्वं समाप्नोषि ततोऽसि सर्वः" (गीता० ११।४०) इत्यादिस्मृत्यैकवाक्यत्वात्। "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (छान्दो० ६।१।४) इत्यादिश्रुतिस्तु नित्यतारूपपारमार्थिकसत्ताविरहोऽर्थः, अन्यथा मृत्तिकादृष्टान्तासिद्धिः; न हि लोके मृत्तिकाविकाराणामत्यन्ततुच्छत्वं सिद्धं, येन दृष्टान्तता स्यादिति।

"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता॥" (गौड़पा० का० २।३२)

इत्यादिश्रुतिस्त्वात्मातिरिक्तस्य 'कूटस्थनित्यतारूपातिपरमार्थसत्ताविरहोऽर्थः। किञ्च, आत्मनो निरोधाद्यभावोऽर्थः, अन्यथैतादृशज्ञानस्य मोक्षफलकत्वप्रतिपादनविरोधात्; न हि मोक्षो मिथ्येति प्रतिपाद्य मोक्षस्य फलत्वमप्रमत्तः प्रतिपादयतीति। याश्चात्मैक्यश्रुतयः, तास्तु प्रथमाध्याये एव व्याख्याताः। ब्रह्ममीमांसाभाष्ये चैता अन्याश्च श्रुतयोऽस्माभिर्व्याख्याता इति दिक्॥ ५२॥

न केवलं वर्त्तमानदशायामेव प्रपञ्चः सन्, अपि तु सदैवेत्याह—

(प्रपञ्चस्य सदा सत्त्वप्रदर्शनम्।—)

## प्रकारान्तरासम्भवात् सदुत्पत्तिः॥ ५३॥

पूर्वोक्तयुक्तिभिरसदुत्पादासम्भवात् सूक्ष्मरूपेण सदेवोत्पद्यतेऽभिव्यक्तं भवतीत्यर्थः॥ ५३॥

कर्तृत्व-भोक्तृत्वयोर्वैयधिकरण्येऽपि व्यवस्थामुपपादयति सूत्राभ्याम्—

(अहङ्कारस्य कर्तृत्वोक्तिः।—)

## अहङ्कारः कर्त्ता न पुरुषः॥ ५४॥

अभिमानवृत्तिकमन्तःकरणमहङ्कारः, स एव कृतिमान्, अभिमानोत्तरमेव प्रायशः प्रवृत्तिदर्शनात्; न तु पुरुषः, अपरिणामित्वादित्यर्थः। पूर्वं च धर्मादिकं बुद्धेरिति यदुक्तं, तदेकस्यैवान्तःकरणस्य वृत्तिमात्रभेदाशयेन ॥ ५४ ॥

( पुरुषस्य भोक्तृत्वोक्तिः ।— )

## चिदवसाना भुक्तिस्तत्कर्मार्जितत्वात् ॥ ५५ ॥

अहङ्कारस्य कर्तृत्वेऽपि भोगश्चित्येव पर्य्यवसन्नो भवति, अहङ्कारस्य संहतत्वेन परार्थत्वात्। नन्वेवम् अनिष्ठकर्मणा अन्यस्य भोगे पुरुषविशेषनियमो न स्यात्? तत्राह—तत्कर्मार्जितत्वादिति अहङ्कारेणार्जितं तस्याश्चितौ यत् कर्म तज्जन्यत्वाद्भोगस्येत्यर्थः। तथा च, योऽहङ्कारो यं पुरुषमादायाचेतने 'अहं' 'मम' इति वृत्तिं करोति, तस्याहङ्कारस्य कर्म तस्यात्मन उच्यते। तेनैव च कर्मणा तत्रात्मनि भोगोऽर्ज्यते इति नातिप्रसङ्ग इत्याशयः ॥ ५५ ॥

ब्रह्मलोकान्तगतिभिर्नास्ति निष्कृतिरिति पूर्वोक्ते कारणं दर्शयति—

( ब्रह्मलोकप्राप्तावपि ज्ञानाभावात् मुक्त्यभावोक्तिः ।— )

## चन्द्रादिलोकेऽप्यावृत्तिर्निमित्तसद्भावात् ॥ ५६ ॥

निमित्तमविवेककर्मादिकम्। सुगममन्यत् ॥ ५६ ॥

ननु तत्तल्लोकवासिजनोपदेशादनावृत्तिः स्यात्? तत्राह—

( उपदेशश्रवणात् मुक्तिवादनिरसनम् ।— )

## लोकस्य नोपदेशात् सिद्धिः पूर्ववत् ॥ ५७ ॥

यथा पूर्वस्य मनुष्यलोकस्योपदेशमात्रान्न सिद्धिर्ज्ञाननिष्पत्तिः, एवं तत्तल्लोकस्थलोकस्योपदेशमात्रात् तद्गतानां ज्ञाननिष्पत्तिर्न नियमेन भवतीत्यर्थः ॥ ५७ ॥

नन्वेवं ब्रह्मलोकादनावृत्तिरिति श्रुतेः का गतिः? तत्राह—

( अनावृत्तिश्रुतेः अर्थप्रदर्शनम् ।— )

## पारम्पर्य्येण तत्सिद्धौ विमुक्तिश्रुतिः ॥ ५८ ॥

ब्रह्मलोकादिगतानां श्रवण-मननादिपरम्परया प्रायशो ज्ञानसिद्धौ

सत्यां विमुक्तिश्रवणं, न तु साक्षात् गतिमात्रेणेत्यर्थः, प्रायिकत्वादन्यलोकादिश्रेष इति ॥ ५८ ॥

परिपूर्णत्वेऽप्यात्मनो गतिश्रुतिमुपपादयति—

( आत्मनो गतिश्रुतेः समाधानम् ।— )

## गतिश्रुतेश्च व्यापकत्वेऽप्युपाधियोगात् भोगदेशकाललाभो व्योमवत् ॥ ५९ ॥

व्यापकत्वेऽप्यात्मनो गतिश्रवणानुरोधेन भोगदेशस्य कालवशाल्लाभः सिध्यति, व्योमवदुपाधियोगेनेत्यर्थः ; यथा ह्याकाशस्य पूर्णत्वेऽपि देशविशेषगतिर्घटाद्युपाधियोगात् व्यवह्रियते, तथैवेति । तथा च श्रुतिः,—

"घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥" (ब्रह्मविन्दु० १३)

इति ॥ ५९ ॥

"भोक्तुरधिष्ठानाद्भोगायतननिर्माणम्—" (५।११४) इति यदुक्तं, तत् प्रपञ्चयति सूत्राभ्याम्—

( भोगायतननिर्मितौ भोक्त्रधिष्ठानत्वोक्तेः समर्थनम् ।— )

## अनधिष्ठितस्य पूतिभावप्रसङ्गान्न तत्सिद्धिः ॥६०॥

भोक्त्रनधिष्ठितस्य शुक्रादेः पूतिभावप्रसङ्गान्न पूर्वोक्तभोगायतनसिद्धिरित्यर्थः ॥ ६० ॥

नन्वधिष्ठानं विनैवादृष्टद्वारा भोक्तृभ्यो भोगायतननिर्माणं भवतु ? तत्राह—

( भोगायतननिर्मितौ भोक्त्रधिष्ठानत्वोक्तेः समर्थनाय युक्त्यन्तरम् ।— )

## अदृष्टद्वारा चेदसम्बद्धस्य तदसम्भवाज्जलादिवदङ्कुरे ॥ ६१ ॥

शुक्रादौ साक्षादसम्बद्धस्यादृष्टस्य शरीरादिनिर्माणे भोक्तृद्वारत्वासम्भवात् बीजासम्बद्धानां जलादीनामङ्कुरोत्पत्तौ कर्षकादिद्वारत्ववदित्यर्थः ; अतः स्वाश्रयसंयोगसम्बन्धेनैवादृष्टसम्बन्धः शुक्रादिषु वक्तव्यः ; तथा च

सिद्धमदृष्टवदात्मसंयोगरूपेणाधिष्ठानस्य भोगोपकरणनिर्माणहेतुत्वमिति भावः ॥ ६१ ॥

वैशेषिकादिनयेनादृष्टस्य सम्बन्धघटकतया आत्मनोऽधिष्ठातृत्वं स्थापितं, स्वसिद्धान्ते त्वदृष्टादीनामात्मधर्मत्वाभावात् तद्द्वारा भोक्तुर्हेतुत्वमेव न सम्भवतीत्याह—

( साङ्ख्यशास्त्रे अदृष्टस्य अहङ्कारधर्मत्वात् आत्मन एव अधिष्ठातृत्वोक्तिः ।— )

## निर्गुणत्वात् तदसम्भवादहङ्कारधर्मा ह्येते ॥६२॥

भोक्तुर्निर्गुणत्वेनादृष्टासम्भवाच्च नादृष्टद्वारकत्वं, हि यस्मादेते अदृष्टादयोऽहङ्कारस्यान्तःकरणसामान्यस्यैव धर्मा इत्यर्थः। तथा चास्मन्मते द्वारैरपेक्ष्येण संयोगमात्रेण साक्षादेव भोक्तुरधिष्ठानं सिध्यतीति भावः ॥ ६२ ॥

ननु चेत् पुरुषो व्यापकस्तर्हि—

"बालाग्रशतभागस्य शतधा कल्पितस्य च।

भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥" ( श्वेताश्व० ५।८ )

इति श्रुतिप्रतिपादितं जीवपरिच्छिन्नत्वमनुपपन्नं, तदीश्वरप्रतिषेधात् पुरुषाणां चैकरूप्याज्जीवात्म-परमात्मविभागोऽपि शास्त्रीयोऽनुपपन्न इति ? तामिमामाशङ्कां परिहर्त्तुमाह—

( श्रौत-जीवपरिच्छिन्नत्वोक्तेः समर्थनाय युक्तिप्रदर्शनम् ।— )

## विशिष्टस्य जीवत्वमन्वयव्यतिरेकात् ॥ ६३ ॥

"जीव बल-प्राणधारणयोः" इति व्युत्पत्त्या जीवत्वं प्राणित्वं, तच्च अहङ्कारविशिष्टपुरुषस्य धर्मः, न तु केवलपुरुषस्य। कुतः ? अन्वयव्यतिरेकात्, अहङ्कारवतामेव सामर्थ्यातिशय-प्राणधारणयोर्दर्शनात्, तच्छून्यानां च चित्तवृत्तिनिरोधस्यैव दर्शनात्, प्रवृत्तिहेतुरागोत्पादकस्याहङ्कारस्याभावादित्यर्थः ; तथा च, अन्तःकरणोपाधिकं जीवस्य परिच्छिन्नत्वं, परमात्माख्यात् केवलपुरुषाद्भिन्नत्वं चेति भावः। अनेन सूत्रेण विशिष्टस्य भोक्तृत्वं वा त्वमहं-प्रत्ययगोचरत्वं वा नोक्तं, साक्षात्काररूपस्य

भोगस्याहङ्कारधर्मत्वाभावात् ; त्वमहं-धर्मिपुरस्कारेण विवेकानुपपत्तेश्च । किन्तु—

"यदा त्वभेदविज्ञानं जीवात्म-परमात्मनोः ।
भवेत् तदा मुनिश्रेष्ठाः ! पाशच्छेदो भविष्यति ॥
आत्मानं द्विविधं प्राहुः परापरविभेदतः ।
परस्तु निर्गुणः प्रोक्त अहङ्कारयुतोऽपरः ॥"

इत्यादिवाक्यशतोक्तो जीवात्म-परमात्मविभाग एव प्रदर्शितः, तत्र जीवतायामहङ्कार उपलक्षणमेवेति ॥ ६३ ॥

इदानीं महदहङ्कारयोः कार्य्यभेदं प्रतिपिपादयिषुरादावहङ्कारकार्य्य-माह—

( अहङ्कारस्य कार्य्यप्रदर्शनम् ।— )

## अहङ्कारकर्त्त्रधीना कार्य्यसिद्धिर्नेश्वराधीना प्रमाणाभावात् ॥ ६४ ॥

अहङ्काररूपो यः कर्त्ता तदधीनैव कार्य्यसिद्धिः सृष्टि-संहारनिष्पत्ति-र्भवति, तादृशबलस्याहङ्कारकार्य्यत्वात्, अनहङ्कृतेषु तत्सामर्थ्यादर्शनात् । न तु वैशेषिकाद्युक्तानहङ्कृतपरमेश्वराधीना, अनहङ्कृतस्रष्टृत्वे नित्येश्वरे च प्रमाणाभावादित्यर्थः । "अहं बहु स्यां प्रजायेय" (छान्दो० ६।२।३) इति ह्यहङ्कारपूर्विकैव सृष्टिः श्रूयते, तत्राहं-शब्दस्यानुकरणमात्रत्वे प्रमाणाभाव इति । अनेन सूत्रेणाहङ्कारोपाधिकं ब्रह्म-रुद्रयोः सृष्टि-संहारकर्त्तृत्वं श्रुति-स्मृतिसिद्धमपि प्रतिपादितम् ॥ ६४ ॥

ननु भवत्वहङ्कारोऽन्येषां कर्त्ता, अहङ्कारस्य तु कः कर्त्ता ? तत्राह—

( अहङ्कारस्य कर्त्त्रभावोक्तिः ।— )

## अदृष्टोद्भूतिवत् समानत्वम् ॥ ६५ ॥

यथा सर्गादिषु प्रकृतिक्षोभककर्माभिव्यक्तिः कालविशेषमात्राद्भवति, तदुद्बोधककर्मान्तरस्य कल्पनेऽनवस्थाप्रसङ्गात्, तथैवाहङ्कारः कालमात्र-निमित्तादेव जायते, न तु तस्यापि कर्त्रन्तरमस्तीति समानत्वमावयो-रित्यर्थः ॥ ६५ ॥

( महत्तत्त्वस्य कार्य्यप्रदर्शनम् ।— )

## महतोऽन्यत् ॥ ६६ ॥

अहङ्कारकार्य्यात् सृष्ट्यादेर्यदन्यत् पालनादिकं तन्महत्तत्त्वाद्भवति, विशुद्धसत्त्वतया अभिमान-रागाद्यभावेन परानुग्रहमात्रप्रयोजनकत्वात् इत्यर्थः । अनेन च सूत्रेण महत्तत्त्वोपाधिकं विष्णोः पालकत्वमुपपादितं, महत्तत्त्वोपाधिकत्वात् तु विष्णुर्महान् परमेश्वरो ब्रह्मेति च गीयते, तदुक्तं—

"यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकम्"

इति । अत्र शास्त्रे-कारणब्रह्म तु पुरुषसामान्यं निर्गुणमेवेष्यते, ईश्वरानभ्युपगमात् ; तत्र च कारणशब्दः स्वशक्तिप्रकृत्युपाधिको वा निमित्तकारणतापरो वा, पुरुषार्थस्य प्रकृतिप्रवर्त्तकत्वादिति मन्तव्यम् ॥ ६६ ॥

अविवेकनिमित्तकः प्रकृति-पुरुषयोर्भोग्य-भोक्तृभाव इति प्रागुक्तं, तत्राविवेक एव किन्निमित्तक इत्याकाङ्क्षायामविवेकधाराकल्पनेऽनवस्थापत्तिरित्याशङ्कायाः प्रामाणिकत्वेन परिहारः सर्ववादिसाधारण इत्याह—

( प्रकृति-पुरुषयोः भोग्य-भोक्तृभावस्य अनादित्वनिर्देशः ।— )

## कर्मनिमित्तः प्रकृतेः स्व-स्वामिभावोऽप्यनादि-बीजाङ्कुरवत् ॥ ६७ ॥

येषां साङ्ख्यैकदेशिनां प्रकृतेः पुरुषस्य च स्व-स्वामिभावो भोग्य-भोक्तृभावः कर्मनिमित्तकः, तन्मतेऽपि स प्रवाहरूपेणानादिरेव, बीजाङ्कुरवत् प्रामाणिकत्वादित्यर्थः, आकस्मिकत्वे मुक्तस्यापि पुनर्भोगापत्तेरिति ॥ ६७ ॥

अविवेकनिमित्तकत्वमतेऽप्येतदनादित्वं समानमित्याह—

( प्रकृति-पुरुषयोः भोग्य-भोक्तृभावे पञ्चशिखमतप्रदर्शनम् ।— )

## अविवेकनिमित्तो वा पञ्चशिखः ॥ ६८ ॥

अविवेकनिमित्तो वा स्व-स्वामिभाव इति पञ्चशिख आह, तन्मतेऽप्यनादिरित्यर्थः । एतदेव स्वमतं प्रागुक्तत्वात् ; अविवेकश्च प्रलयेऽपि कर्मवदेवास्ति वासनारूपेणेति । विवेकप्रागभावोऽविवेक इति मते तु बीजाङ्कुरवदनादित्वं न घटते, अखण्डप्रागभावस्यैवाखिलभोगहेतुत्वादिति ॥ ६८ ॥

( प्रकृति-पुरुषयोः भोग्य-भोक्तृभावे सनन्दनाचार्य्यमतप्रदर्शनम् ।— )

## लिङ्गशरीरनिमित्तक इति सनन्दनाचार्य्यः ॥६९॥

सनन्दनाचार्य्यस्तु लिङ्गशरीरनिमित्तकः प्रकृति-पुरुषयोर्भोग्य-भोक्तृभाव इत्याह, लिङ्गशरीरद्वारैव भोगादिति; तन्मतेऽप्यनादिः स इत्यर्थः । यद्यपि प्रलये लिङ्गशरीरं नास्ति, तथाऽपि तत्कारणमविवेककर्म्मादिकं पूर्वसर्गीयलिङ्गशरीरजन्यमस्ति, तद्द्वारा वीजाङ्कुरतुल्यत्वं स्व-स्वामिभाव-लिङ्गशरीरयोरित्याशयः ॥ ६९ ॥

शास्त्रवाक्यार्थमुपसंहरति—

( शास्त्रार्थोपसंहारः ।— )

## यद्वा तद्वा तदुच्छित्तिः पुरुषार्थस्तदुच्छित्तिः पुरुषार्थः ॥ ७० ॥

कर्म्मनिमित्तो वा अविवेकादिनिमित्तो वा भवतु प्रकृति-पुरुषयोर्भोग्य-भोक्तृभावः, सर्वथाऽप्यनादितया दुरुच्छेदस्य तस्योच्छेदः परमपुरुषार्थः इत्यर्थः । तदेतदादौ प्रतिज्ञातं "त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" (१।१) इति । नन्वत्र सुख-दुःखसाधारणभोगनिवृत्तिः पुरुषार्थ उच्यते, तत्र दुःखमात्रनिवृत्तिरिति कथं तत्रोक्तस्यात्रोपसंहारः ? इति चेत्, न, शब्दभेदेऽप्यर्थाभेदात्, सुखं हि तावत् दुःखपक्षे निक्षिप्तमिति सुखभोगोऽपि दुःखभोग एव, दुःखभोगोऽपि प्रतिविम्बरूपेण पुरुषे दुःखसम्बन्ध एव; अतो नित्यनिर्दुःखत्वेन च प्रथमसूत्रेऽपि प्रतिविम्बरूपैव दुःखनिवृत्ति-र्विवक्षिता इत्येक एवार्थ उपक्रमोपसंहारसूत्रयोरिति । बहुलांशस्य द्विरावृत्तिः शास्त्रसमाप्त्यर्था ॥ ७० ॥

शास्त्रमुख्यार्थविस्तारस्तन्त्राख्येऽनुक्तपूरणैः ।
षष्ठाध्याये कृतः पश्चाद्वाक्यार्थश्चोपसंहृतः ॥

( साङ्ख्यकारकपिलस्य विष्णोरवतारत्वसमर्थनम् ।— )

तदिदं साङ्ख्यशास्त्रं कपिलमूर्त्तिर्भगवान् विष्णुरखिललोकहिताय प्रकाशितवान् । यत् तत्र वेदान्तिब्रुवः कश्चिदाह, साङ्ख्यप्रणेता कपिलो न विष्णुः, किन्त्वग्न्यवतारः कपिलान्तरम्—

"अग्निः स कपिलो नाम साङ्ख्यशास्त्रप्रवर्त्तकः"

इति स्मृतेरिति, तल्लोकव्यामोहनमात्रम्—

"एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात् ।
प्रसङ्ख्यानाय तत्त्वानां सम्मतायात्मदर्शनम् ॥"

इत्यादिस्मृतिषु विष्णवतारस्य देवहूतिपुत्रस्यैव साङ्ख्योपदेष्टृत्वावगमात्, कपिलद्वयकल्पनागौरवाच्च । तत्र चाग्निशब्दोऽग्न्याख्यशक्त्यावेशादेव प्रयुक्तः । यथा—

"कालोऽस्मि लोकक्षयकृत् प्रवृद्धः"

इति श्रीकृष्णवाक्ये कालशक्त्यावेशादेव कालशब्दः; अन्यथा विश्वरूपप्रदर्शककृष्णस्यापि विष्णवतारकृष्णाद्भेदापत्तेरिति दिक् ।

भाष्योपसंहारः ।—

साङ्ख्यकुल्याः समापूर्य्य वेदान्तमथितामृतैः ।
कपिलर्षिर्ज्ञानयज्ञ ऋषीनापाययत् पुरा ॥
तद्वच:श्रद्धया तस्मिन् गुरौ च स्थिरभावतः ।
तत्प्रसादलवेनेदं तच्छास्त्रं विवृतं मया ॥

इति साङ्ख्याचार्य्य-श्रीविज्ञानभिक्षुविरचिते कापिलसाङ्ख्यप्रवचनस्य भाष्ये तन्त्राध्यायः षष्ठः ॥ ६ ॥

इति साङ्ख्यप्रवचनभाष्यं समाप्तम् ॥

